पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम् ।
जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्तिताः[२] ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः
एकादशोऽध्यायः ॥ ११ ॥

---

८. प्रक. गूढपुरुषप्रणिधिः ॥

ये चाप्यसंबन्धिनोऽवश्यभर्तव्यास्ते लक्षणमङ्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं निमित्तमन्तरचक्रमित्यधीयानाः सत्त्रिणः । संसर्गविद्या वा । ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः[३] । ये बन्धुषु निःस्नेहाः क्रूराश्चालसाश्च ते रसदाः[४] । परिव्राजिका वृत्तिकामा दरिद्रा विधवा प्रगल्भा ब्राह्मण्यन्तःपुरे कृतसत्कारा महामात्रकुलान्यधिगच्छेत्[५] । एतया मुण्डा वृषल्यो व्याख्याताः[६] । इति संचाराः[७] । तान्राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसंनिधातृप्रदेष्टृनायकपौरव्यावहारिककार्तान्तिकमन्त्रिपरिषदध्यक्षदण्डदुर्गान्तपालाटविकेषु श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशान्भक्तितः सामर्थ्ययोगाच्चापसर्पयेत्[८] ।

तेषां बाह्यं चारं छत्रभृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणः तीक्ष्णा विद्युः[९] । तं सत्त्रिणः संस्थास्वर्पयेयुः[१०] ।

सूदारालिकस्नापकसंवाहकास्तरककल्पकप्रसाधकोदकपरिचारका रसदाः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मानो नटनर्तकगायनवादकवाग्जीवनकुशीलवाः स्त्रियश्चाभ्यन्तरं चारं विद्युः[११] । तं भिक्षुक्यः संस्थास्वर्पयेयुः[१२] । संस्थानामन्तेवासिनः संज्ञालिपिभिश्चारसंचारं कुर्युः[१३] । न चान्योन्यं संस्थास्ते वा विद्युः[१४] । भिक्षुकीप्रतिषेधे द्वाःस्थपरम्परा मातापितृव्यञ्जनाः शिल्पकारिकाः कुशीलवा दास्यो वा गीतपाठ्यवाद्यभाण्डगूढ-

लेख्यसंज्ञाभिर्वा चारं निर्हारयेयुः[१५]। दीर्घरोगोन्मादाग्निरसविसर्गेण वा गूढनिर्गमनम्[१६]। त्रयाणा मेकवाक्ये संप्रत्ययः[१७]। तेषामभीक्ष्णविनिपाते तूष्णींदण्डः प्रतिषेधो वा[१८]। कण्टकशोधनोक्ताश्चापसर्पाः परेषु कृतवेतना वसेयुः संपातनिश्चारार्थम्[१९]। त उभयवेतनाः[२०]।

गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान्।
तांश्चारिप्रहितान्विद्यात्तेषां शौचं च तद्विधैः[२१] ॥
एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान्।
उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि[२२] ॥
अन्तर्गृहचरास्तेषां कुब्जवामनवञ्चकाः।
शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः[२३] ॥
दुर्गेषु वणिजः संस्था दुर्गान्ते सिद्धतापसाः।
कर्षकोदास्थिता राष्ट्रे राष्ट्रान्ते व्रजवासिनः[२४] ॥
वने वनचराः कार्याः श्रमणाटविकादयः।
परप्रवृत्तिज्ञानार्थं शीघ्राश्चारपरंपराः[२५] ॥
परस्य चैते बोद्धव्यास्तादृशैरेव तादृशाः।
चारसंचारिणः संस्था गूढाश्च गूढसंज्ञिताः[२६] ॥
अकृत्यान्कृत्यपक्षीयैर्दर्शितान्कार्यहेतुभिः।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत्[२७] ॥

इति विनयाधिकारिके प्रथमे ऽधिकरणे गूढपुरुषोत्पत्तौ संचारोत्पत्तिः गूढपुरुषप्रणिधिः द्वादशो ऽध्यायः ॥ १२ ॥

---

९ प्रक. स्वविषये कृत्याकृत्यपक्षरक्षणम्।

कृतमहामात्रापसर्पः पौरजानपदानपसर्पयेत्[१]। सत्त्रिणो द्वंद्विनस्तीर्थसभाशालापूगजनसमवायेषु विवादं कुर्युः[२]। सर्वगुणसंपन्नश्चायं राजा श्रूयते[३]। न चास्य कश्चिद्गुणो दृश्यते यः पौरजानपदान्दण्डकराभ्यां पीडयतीति[४]। तत्र ये ऽनुप्रशंसेयुस्ता-

नितरस्तं च प्रतिषेधयेत्[५]। मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे[६]। धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः[७]। तेन भृता राजानः प्रजानां योगक्षेमवहास्तेषां किल्बिषमदण्डकरा हरन्ति अयोगक्षेमवहाश्च प्रजानाम्। तस्मादुञ्छषड्भागमारण्यका अपि निवपन्ति तस्यै-तद्भागधेयं यो ऽस्मान्गोपायतीति[८]। इन्द्रयमस्थानमेतद्राजानः प्रत्यक्षहेडप्रसादाः। तानवमन्यमानान्दैवो ऽपि दण्डः स्पृशति[११]। तस्माद्राजानो नावमन्तव्या इति क्षुद्रकान्प्रतिषेधयेत्[१२]। किंवदन्तीं च विद्युः[१३]। ये चास्य धान्यपशुहिरण्यान्याजीवन्ति तैरुपकुर्वन्ति व्यसने ऽभ्युदये वा कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्त्यमित्र-माटविकं वा प्रतिषेधयन्ति तेषां मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः[१४]। तुष्टानर्थमानाभ्यां पूजयेत्[१५]। अतुष्टांस्तुष्टिहेतोस्त्यागेन साम्ना च प्रसादयेत्[१६]। परस्पराद्वा भेदयेदेनान्सामन्ताटविकतत्कु-लीनावरुद्धेभ्यश्च[१८]। तथाप्यतुष्यतो दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत्[१९]। विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत्[२०]। गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत्[२१]। परेषामास्प-दभयात्[२२]। क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः[२३]। तेषां कार्ता-न्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसंबन्धममित्राटविक-प्रतिसंबन्धं वा विद्युः[२४]।

तुष्टानर्थमानाभ्यां पूजयेत्। अतुष्टान्सामदानभेददण्डैः साधयेत्।

एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः।
परोपजापात्संरक्षेत्प्रधानान्क्षुद्रकानपि[२५]॥

इति विनयाधिकारिके प्रथमे ऽधिकरणे स्वविषये कृत्याकृत्यपक्षरक्षणं त्रयोदशो ऽध्यायः॥ १३॥

---

## १०. प्रक. परविषये कृत्याकृत्यपक्षोपग्रहः।

कृत्याकृत्यपक्षोपग्रहः स्वविषये व्याख्यातः। परविषये वाच्यः। संश्रुत्यार्थान्विप्रलब्धस्तुल्याधिकारिणोः शिल्पे वोपकार

वा विमानितो वल्लभावरुद्धः समाहूय पराजितः प्रवासोपतप्तः कृत्वा व्ययमलब्धकार्यः स्वधर्माद्दायाद्याद्वोपरुद्धो मानाधिकाराभ्यां भ्रष्टः, कुल्यैरन्तर्हितः प्रसभाभिमृष्टस्त्रीकः कारादिन्यस्तः परोक्तदण्डितो मिथ्याचारवारितः सर्वस्वमाहारितो बन्धनपरिक्लिष्टः प्रवासितबन्धुरिति क्रुद्धवर्गः[3]। स्वयमुपहतो विप्रकृतः पापकर्माभिख्यातस्तुल्यदोषदण्डेनोद्विग्नः पर्यात्तभूमिर्दण्डेनोपनतः सर्वाधिकरणस्थः सहसोपचितार्थस्तत्कुलीनोपाशंसुः प्रद्विष्टो राज्ञा राजद्वेषी चेति भीतवर्गः[4]। परिक्षीणो ऽत्यात्तस्वः कदर्यो व्यसन्यत्याहितव्यवहारश्चेति लुब्धवर्गः[5]। आत्मसंभावितो मानकामः शत्रुपूजामर्षितो नीचैरुपाहितस्तीक्ष्णः साहसिको भोगेनासंतुष्ट इति मानिवर्गः[6]। तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत्[7]। यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नात्येवमयमशास्त्रचक्षुरन्धो राजा पौरजानपदवधायाभ्युत्थितः[8]। शक्यमस्य प्रतिहस्तिप्रोत्साहनेनापकर्तुममर्षः क्रियतामिति क्रुद्धवर्गमुपजापयेत्[9]। यथा भीतः सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजत्येवमयं राजा जातदोषाशङ्कस्त्वयि पुरा क्रोधविषमुत्सृजत्यन्यत्र गम्यतामिति भीतवर्गमुपजापयेत्[10]। यथा श्वगणिनां धेनुः श्वभ्यो दुग्धे न ब्राह्मणेभ्य एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नात्मगुणसंपन्नेभ्यः[11]। असौ राजा पुरुषविशेषज्ञस्तत्र गम्यतामिति लुब्धवर्गमुपजापयेत्[12]।

यथा चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषामेवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम्[13]। असौ राजा पुरुषविशेषज्ञस्तत्र गम्यतामिति मानिवर्गमुपजापयेत्[14]।

तथेति प्रतिपन्नांस्तान्संहितान्पणकर्मणा ।
योजयेत यथाशक्ति सापसर्पान्स्वकर्मसु[15] ॥

लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु ।
अकृत्यान्भेददण्डाभ्यां परदोषांश्च दर्शयेत् ॥

इति विनयाधिकारिके प्रथमे ऽधिकरणे परविषये कृत्याकृत्यपक्षोपग्रहः
चतुर्दशो ऽध्यायः ॥१४॥

११. प्रक. मन्त्राधिकारः ।

कृतस्वपक्षपरपक्षोपग्रहः कार्यारम्भांश्चिन्तयेत्[1] । मन्त्रपूर्वाः सर्वारम्भाः[2] । तदुद्देशः संवृतः कथानामनिस्रावी पक्षिभिरप्यनालोक्यः स्यात्[3] । श्रूयते हि शुकशारिकाभिर्मन्त्रो भिन्नः श्वभिरन्यैश्च तिर्यग्योनिभिः[4] । तस्मान्मन्त्रोद्देशमनायुक्तो नोपगच्छेत्[5] । उच्छिद्येत मन्त्रभेदी[6] । मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्याम्[7] । इङ्गितमन्यथावृत्तिः । आकृतिग्रहणमाकारः[8] । तस्य संवरणमायुक्तपुरुषरक्षणमा कार्यकालादिति[10] । तेषां हि प्रमादमदसुप्तप्रलापकामादिरुत्सेकः[11] । प्रच्छन्नो ऽवमतो वा मन्त्रं भिनत्ति[12] । तस्माद्रक्षेन्मन्त्रम्[13] । मन्त्रभेदो ऽयोगक्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च[14] । तस्माद्गुह्यमेको मन्त्रयेतेति भारद्वाजः[15] । मन्त्रिणामपि हि मन्त्रिणो भवन्ति[16] । तेषामप्यन्ये[17] । सैषा मन्त्रिपरंपरा मन्त्रं भिनत्ति[18] ।

तस्मान्नास्य परे विद्युः कर्म किंचिच्चिकीर्षितम्[19] ।
आरब्धारस्तु जानीयुरारब्धं कृतमेव वा[20] ॥

नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः । प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः[21] । अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चयो निश्चितस्य बलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्[22] । तस्माद्बुद्धिवृद्धैः सार्धमासीत मन्त्रम्[23] ।

न कंचिदवमन्येत सर्वस्य शृणुयान्मतम् ।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः[24] ॥

एतन्मन्त्रज्ञानं नैतन्मन्त्ररक्षणमिति पाराशराः[२५]। यदस्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्[२६]। कार्यमिदमेवमासीदेवं वा यदि भवेत्तत्कथं कर्तव्यमिति[२७]। ते यथा ब्रूयुस्तत्कुर्यात्[२८]। एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति[२९]।

नेति पिशुनः[३०]। मन्त्रिणो हि व्यवहितमर्थं वृत्तमवृत्तं वा पृष्टमनादरेण ब्रुवन्ति प्रकाशयन्ति वा[३१]। स दोषः[३२]। तस्मात्कर्मसु येषु येऽभिप्रेतास्तैः सह मन्त्रयेत्[३३]। तैर्मन्त्रयमाणो हि मन्त्रवृद्धिं गुप्तिं च लभत इति[३४]। नेति कौटिल्यः[३५]। अनवस्था ह्येषा[३६]। मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत[३७]। मन्त्रयमाणो ह्येकेनार्थकृच्छ्रेषु निश्चयं नाधिगच्छेत्[३८]। एकश्च मन्त्री यथेष्टमनवग्रहश्चरति[३९]। द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्यामवगृह्यते[४०]। विगृहीताभ्यां विनाश्यते[४१]। त्रिषु चतुर्षु वा नैकान्तं कृच्छ्रेणोपपद्यते महादोषम्[४२]। दोष उपपन्नस्तु भवति[४३]। ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते[४४]। मन्त्रो वा रक्ष्यते[४५]। देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत[४६]। कर्मणामारम्भोपायः पुरुषद्रव्यसंपद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः[४७]। तानेकैकशः पृच्छेत् समस्तांश्च[४८]॥

हेतुभिश्चैकैकं मतं प्रविशोद्विद्वान्[४९]। अवाप्तार्थः कालं नातिक्रामयेत्[५०]। न दीर्घकालं मन्त्रयेत च तेषां च रक्षेद्येषामपकुर्यात्[५१]। मन्त्रिपरिषदं द्वादशामात्यान्कुर्वीतेति मानवाः[५२]। षोडशेति बार्हस्पत्याः[५३]। विंशतिमित्यौशनसाः[५४]। यथासामर्थ्यमिति कौटिल्यः[५५]। ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः[५६]। अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसंपदं च कर्मणां कुर्युः[५७]। आसन्नैः सह कार्याणि पश्येत्[५८]। अनासन्नैः सह पत्त्रसंप्रेषणेन मन्त्रयेत[५९]। इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम्[६०]। स तच्चक्षुः[६१]। तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः[६२]। आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं

चाहूय ब्रूयात्[६३]। तत्र यद्ब्रूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत्कुर्यात्[६४]। कुर्वतश्च।

नास्य गुह्यं परे विद्युः छिद्रं विद्यात्परस्य च।
गूहेत्कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः[६५]॥
यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति।
एवमश्रुतशास्त्रार्थो न मन्त्रं श्रोतुमर्हति[६६]॥

इति विनयाधिकारिके प्रथमे ऽधिकरणे मन्त्राधिकारः पञ्चदशो ऽध्यायः॥१५॥

१२. प्रक. दूतप्रणिधिः

उद्धृतमन्त्रो दूतप्रणिधिः[१]। अमात्यसंपदोपेतो निसृष्टार्थः[२]। पादगुणहीनः परिमितार्थः[३]। अर्धगुणहीनः शासनहरः[४]। सुप्रतिविहितयानवाहनपुरुषपरिवापः प्रतिष्ठेत[५]। शासनमेवं वाच्यं परः स वक्ष्यत्येवं तस्येदं प्रतिवाक्यमेवमतिसंधातव्यमित्यधीयानो गच्छेत्[६]। अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत्[७]। अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य चावेक्षेत[८]। दुर्गराष्ट्रप्रमाणं सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत[९]। पराधिष्ठानमनुज्ञातः प्रविशेत्[१०]। शासनं च यथोक्तं ब्रूयात्[११]। प्राणाबाधे ऽपि दृष्टे[१२]। परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं वाक्यपूजनमिष्टपरिप्रश्नं गुणकथासङ्गमासन्नमासनं सत्कारमिष्टेऽनुसरणं विश्वासगमनं च लक्षयेत्तुष्टस्य[१३]। विपरीतमतुष्टस्य[१४]। तं ब्रूयात्[१५]। दूतमुखा वै राजानस्त्वं चान्ये च[१६]। तस्मादुद्यतेष्वपि शस्त्रेषु यथोक्तं वक्तारस्तेषामन्तावसायिनो ऽप्यवध्याः[१७]। किमङ्ग पुनर्ब्राह्मणाः[१८]। परस्यैतद्वाक्यमेष दूतधर्म इति[१९]। वसेदविसृष्टः प्रपूजया नोत्सिक्तः[२०]। परेषु बलित्वं न मन्येत[२१]। वाक्यमनिष्टं सहेत[२२]। स्त्रियः पानं च वर्जयेत्[२३]। एकः शयीत[२४]। सुप्तमत्तयोर्हि भावज्ञानं दृष्टम्[२५]। कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं रागापरागौ भर्तरि रन्ध्रं च

प्रकृतीनां तापसवैदेहकव्यञ्जनाभ्यामुपलभेत[२८]। तयोरन्तेवासिभिश्चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा[२७]। तेषामसंभाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः[२८]। पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत[२९]। उपलब्धस्योपजापमुपेयात्[३०]। परेण चोक्तः स्वासां प्रकृतीनां परिमाणं नाचक्षीत[३१]। सर्वं वेद भवानिति ब्रूयात्[३२]। कार्यसिद्धिकरं वा[३३]। कार्यस्यासिद्धावुपरुध्यमानस्तर्कयेत्[३४]। किं भर्तुर्मे व्यसनमासन्नं पश्यन्[३५]। स्वं वा व्यसनं प्रतिकर्तुकामः[३६]। पार्ष्णिग्राहासारावन्तःकोपमाटविकं वा समुत्थापयितुकामः[३७]। मित्रमाक्रन्दाभ्यां वा व्यापादयितुकामः[३८]। स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः[३९]। संसिद्धं मे भर्तुर्यात्राकारमभिहन्तुकामः सस्यकुप्यपण्यसंग्रहं दुर्गकर्म बलसमुत्थानं वा कर्तुकामः[४०]। स्वसैन्यानां वा व्यायामदेशकालावाकाङ्क्षमाणः[४१]। परिभवप्रमादाभ्यां वा[४२]। संसर्गानुबन्धार्थी वा[४३]। मामुपरुणद्धीति[४४]। ज्ञात्वा वसेदपसरेद्वा[४५]। प्रयोजनमिष्टमवेक्षेत वा[४६]। शासनमनिष्टमुक्त्वा बन्धवधभयादविसृष्टो व्यपगच्छेत्[४७]। अन्यथा नियम्येत[४८]।

प्रेषणं संधिपालत्वं प्रतापो मित्रसंग्रहः।
उपजापः सुहृद्भेदो गूढदण्डातिसारणम्[४९]॥
बन्धुरत्नापहरणं चारज्ञानं पराक्रमः।
समाधिमोक्षो दूतस्य कर्मयोगस्य चाश्रयः[५०]॥
स्वदूतैः कारयेदेतत्परदूतांश्च रक्षयेत्।
प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः[५१]॥

इति विनयाधिकारिके प्रथमेऽधिकरणे दूतप्रणिधिः षोडशोऽध्यायः॥ १६ ॥

---

## १३. प्रक. राजपुत्ररक्षणम्

रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः परेभ्यश्च[१]। पूर्वं दारेभ्यः पुत्रेभ्यश्च[२]। दाररक्षणं निशान्तप्रणिधौ वक्ष्यामः[३]। पुत्ररक्षणम्[४]। जन्मप्रभृति राजपुत्रान्रक्षेत्[५]। कर्कटकसधर्माणो हि जनकभक्षा राजपुत्राः[६]। तेषामजातस्नेहे पितर्युपांशुदण्डः श्रेयानिति भारद्वाजः[७]।

नृशंसमदृष्टवधः क्षत्रबीजविनाशश्चेति विशालाक्षः । तस्मादेक-
स्थानावरोधः श्रेयानिति [९] । अहिभयमेतदिति पाराशराः [१०] । कुमारो
हि विक्रमभयान्मां पिता रुणद्धीति ज्ञात्वा तमेवाङ्के कुर्यात् [११] । तस्मा-
दन्तपालदुर्गे वासः श्रेयानिति [१२] । और‌भ्रकं भयमेतदिति पिशुनः [१३] ।
प्रत्यापत्तिर्हि तदेव कारणं ज्ञात्वान्तपालसखः स्यात् [१४] । तस्मात्स्व-
विषयादपकृष्टे सामन्तदुर्गे वासः श्रेयानिति [१५] । वत्सस्थानमेत-
दिति कौणपदन्तः [१६] । वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात् [१७] ।
तस्मान्मातृबन्धुषु वासः श्रेयानिति [१८] । ध्वजस्थानमेतदिति वात-
व्याधिः [१९] । तेन हि ध्वजेनादितिकौशिकवदस्य मातृबान्धवा
भिक्षेरन् [२०] । तस्माद्ग्राम्यधर्मेष्वेनमवसृजेयुः [२१] । सुखोपरुद्धा हि पुत्राः
पितरं नाभिद्रुह्यन्तीति [२२] । जीवन्मरणमेतदिति कौटिल्यः [२३] । काष्ठ-
मिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत [२४] ।
तस्मादृतुमत्यां महिष्यां ऋत्विजश्चरुमैन्द्रबार्हस्पत्यं निर्वपेयुः [२५] । आप-
न्नसत्वायां कौमारभृत्यो गर्भभर्मणि प्रजनने च वियतेत [२६] । प्रजा-
तायाः पुत्रसंस्कारं पुरोहितः कुर्यात् [२७] । समर्थं तद्विदो विनयेयुः [२८] ।
सत्त्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत् [२९] । पितरि विक्र-
म्य राज्यं गृहाणेति [३०] । तदन्यः सत्त्री प्रतिषेधयेत्याम्भीयाः [३१] ।
महादोषमबुद्धबोधनमिति कौटिल्यः [३२] । नवं हि द्रव्यं येन येनार्थ-
जातेनोपदिह्यते तत्तदाचूषति [३३] । एवमयं नवबुद्धिर्यद्यदुच्यते तत्त-
च्छास्त्रोपदेशमिवाभिजानाति [३४] । तस्माद्धर्ममर्थं चास्योपदिशेन्ना-
धर्ममनर्थं च [३५] । सत्त्रिणस्त्वेनं तव स्म इति वदन्तः पालयेयुः [३६] ।
यौवनोत्सेकात्परस्त्रीषु मनः कुर्वाणमार्याव्यञ्जनाभिः स्त्रीभिरमे-
ध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः [३७] । मद्यकामं योगपानेनोद्वेज-
येयुः [३८] । द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः [३९] । मृगयाकामं प्रति-
रोधकव्यञ्जनैस्त्रासयेयुः [४०] । पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेद-
येयुः [४१] । अप्रार्थनीयो राजा विपन्ने घातः संपन्ने नरकपातः संक्रो-
शः प्रजाभिरेकलोष्टवधश्चेति [४२] । विरागं प्रियमेकपुत्रं वा बध्नीयात् [४३] ।

बहुपुत्रः प्रत्यन्तमन्यविषयं वा प्रेषयेद्यत्र गर्भः पण्डो डिम्बो वा न भवेत्[४४] । आत्मसंपन्नं सैनापत्ये यौवराज्ये वा स्थापयेत्[४५] । बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः[४६] । शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान्[४७] । उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः[४८] । अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः[४९] । स यद्येकपुत्रः पुत्रोत्पत्तावस्य प्रयतेत[५०] । पुत्रिकापुत्रानुत्पादयेद्वा[५१] । वृद्धस्तु व्याधितो वा राजा मातृबन्धुकुल्यगुणवत्सामन्तानामन्यतमेन क्षेत्रे बीजमुत्पादयेत्[५२] । न चैकपुत्रमविनीतं राज्ये स्थापयेत्[५३] ।

बहूनामेकसंरोधः पिता पुत्रहितो भवेत् ।
अन्यत्रापद ऐश्वर्यं ज्येष्ठभागस्तु पूज्यते[५४] ॥
कुलस्य वा भवेद्राज्यं कुलसङ्घो हि दुर्जयः ।
अराजव्यसनाबाधः शश्वदावसति क्षितिम्[५५] ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे राजपुत्ररक्षणं सप्तदशोऽध्यायः ॥ १७ ॥

---

### १४–१५ प्रक. अवरुद्धवृत्तमवरुद्धे च वृत्तिः ।

राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत[१] । अन्यत्र प्राणाबाधकप्रकृतिकोपकपातकेभ्यः[२] । पुण्यकर्मणि नियुक्तः पुरुषमधिष्ठातारं याचेत[३] । पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत्[४] । अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत्[५] । तथाप्यतुष्यन्तमन्यस्मिन्पुत्रे दारेषु वा स्निह्यन्तमरण्यायापृच्छेत[६] । बन्धवधभयाद्वा यः सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत[७] । तत्रस्थः कोशदण्डसंपन्नः प्रवीरपुरुषकन्यासंबन्धमटवीसंबन्धं कृत्यपक्षोपग्रहं वा कुर्यात्[८] । एकचरः सुवर्णपाकमणिरागहेमरूप्यपण्याकरकर्मान्तानाजीवेत्[९] । पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं देवद्रव्यमाढ्यविधवां वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसंधायापहरेत्[१०] । पारग्रामिकं वा योगमा-

तिष्ठेत् । मातुः परिजनोपग्रहेण वा चेष्टेत । कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डछद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखश्छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयात् । अहमसौ कुमारः सहभोग्यमिदं राज्यमेको नार्हति भोक्तुं तत्र ये कामयन्ते भर्तुं नाहं द्विगुणेन भक्तवेतनेनोपस्थास्य इति । इत्यवरुद्धवृत्तम् । अवरुद्धं तु मुख्यपुत्रमपसर्पाः प्रतिपाद्यानयेयुः । माता वा प्रतिगृहीता । त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः । अत्यक्तं तुल्यशीलाभिः स्त्रीभिः पानेन मृगयया वा प्रसज्य रात्रावुपगृह्यानयेयुः ॥

उपस्थितं च राज्येन ममोर्ध्वमिति सान्त्वयेत् ।
एकस्थमथ संरुन्ध्यात्पुत्रवान्वा प्रवासयेत् ॥

इति विनयाधिकारिके प्रथमेऽधिकरणेऽवरुद्धवृत्तमवरुद्धे च वृत्तिः अष्टादशोऽध्यायः ॥ १८ ॥

## १९. प्रक. राजप्रणिधिः.

राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः । प्रमाद्यन्तमनुप्रमाद्यन्ति । कर्माणि चास्य भक्षयन्ति । द्विषद्भिश्चातिसंधीयेत । तस्मादुत्थानमात्मनः कुर्वीत । नाडिकाभिरहरष्टधा रात्रिं च विभजेत । छायाप्रमाणेन वा । त्रिपौरुषी पौरुषी चतुरङ्गुलाच्छायो मध्याह्न इति पूर्वे दिवसस्याष्टभागाः । तैः पश्चिमा व्याख्याताः । तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात् । द्वितीये पौरजानपदानां कार्याणि पश्येत् । तृतीये स्नानभोजनं सेवेत । स्वाध्यायं च कुर्वीत । चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत । पञ्चमे मन्त्रिपरिषदा पत्रसंप्रेषणेन मंत्रयेत । चारगुह्यबोधनीयानि च बुद्ध्येत । षष्ठे स्वैरविहारं मंत्रं वा सेवेत । सप्तमे हस्त्यश्वरथायुधीयान्पश्येत् । अष्टमे सेनापतिसखो विक्रमं चिन्तयेत् । प्रतिष्ठितेऽहनि संध्यामुपासीत । प्रथमे रात्रिभागे

गूढपुरुषान्पश्येत्[21]। द्वितीये स्नानभोजनं कुर्वीत स्वाध्यायं च[22]। तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत[23]। षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्[24]। सप्तम मंत्रमध्यासीत गूढपूरुषांश्च प्रेषयेत्[25]। अष्टम ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्[26]। चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येत्[27]। सवत्सां धेनुं वृषभं च प्रदक्षिणीकृत्योपस्थानं गच्छेत्[28]। आत्मबलानुकूल्येन वा निशाहर्भागान्प्रविभज्य कार्याणि सेवेत[29]। उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत्[30]। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते[31]। तेन प्रकृतिकोपमरिवशं वा गच्छेत्[32]। तस्माद्देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्[33]। कार्यगौरवादात्ययिकवशेन वा[34]।

सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत्।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वाभिजायते[35]॥
अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम्।
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च[36]॥
तपस्विनां तु कार्याणि त्रैविद्यैः सह कारयेत्।
मायायोगविदां चैव न स्वयं कोपकारणात्[37]॥
राज्ञो हि व्रतमुत्थानं यज्ञ कार्यानुशासनम्।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम्[38]॥
प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्[39]॥
तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम्।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः[40]॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च।
प्राप्यते फलमुत्थानाल्लभते चार्थसंपदम्[41]॥

इति विनयाधिकारिके प्रथमे ऽधिकरणे राजप्रणिधिः एकोनविंशो ऽध्यायः॥१९॥

## १७. प्रक. निशान्तप्रणिधिः

वास्तुकप्रशस्ते देशे सप्राकारपरिखाद्वारमनेककक्ष्यापरिगतमन्तःपुरं कारयेत्[१]। कोशगृहविधानेन वासगृहं गूढभित्तिसंचारं मोहनगृहं तन्मध्ये वा वासगृहं भूमिगृहं वासन्नकाष्ठचैत्यदेवताविधानद्वारमनेकसुरुङ्गासंचारं प्रासादं वा गूढभित्तिसोपानं सुषिरस्तम्भप्रवेशापसारं वा वासगृहं यन्त्रबद्धतलावपातं कारयेत्[२]। आपत्प्रतीकारार्थमापदि वा कारयेत्[३]। अतोऽन्यथा वा विकल्पयेत्[४]। सहाध्यायिभयात्[५]। मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति[६]। न चात्रान्योऽग्निर्ज्वलति[७]। वैद्युतेन भस्मना मृत्संयुक्तेन करकवारिणावलिप्तं च[८]। जीवन्तीश्वेतामुष्ककपुष्पवन्दाकाभिरक्षीवे जातस्याश्वत्थस्य प्रतानेन वा गुप्तं सर्पा विषाणि वा न प्रसहन्ते[९]। मार्जारमयूरनकुलपृषतोत्सर्गः सर्पान्भक्षयति[१०]। शुकशारिका भृङ्गराजो वा सर्पविषशङ्कायां क्रोशति[११]। क्रौञ्चो विषाभ्याशे माद्यति[१२]। ग्लायति जीवजीवकः[१३]। म्रियते मत्तकोकिलः[१४]। चकोरस्याक्षिणी विरज्येते[१५]। इत्येवं अग्निविषसर्पेभ्यः प्रतिकुर्वीत[१६]। पृष्ठतः कक्ष्याविभागे स्त्रीनिवेशो गर्भव्याधिवैद्यप्रख्यातसंस्था वृक्षोदकस्थानं च[१७]। बहिः कन्याकुमारपुरम्[१८]। पुरस्तादलंकार भूमिर्मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च[१९]। कक्ष्यान्तरेष्वन्तर्वंशिकसैन्यं तिष्ठेत्[२०]। अन्तर्गृहगतः स्थविरस्त्रीपरिशुद्धां देवीं पश्येत्[२१]। न कांचिदभिगच्छेत्[२२]। देवीगृहे लीनो हि भ्राता भद्रसेनं जघान[२३]। मातुः शय्यान्तर्गतश्च पुत्रः कारूशम्[२४]। लाजान्मधुनेति विषेण पर्यस्य देवी काशिराजम्[२५]। विषदिग्धेन नूपुरेण वैरन्त्यं मेखलामणिना सौवीरं जालूथमादर्शेन वेण्यां गूढं शस्त्रं कृत्वा देवी विदूरथं जघान[२६]। तस्मादेतान्यास्पदानि परिहरेत्[२७]।

मुण्डजटिलकुहकप्रतिसंसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत्[२८]। न चैनाः कुल्याः पश्येयुरन्यत्र गर्भव्याधिसंस्थाभ्याम्[२९]। रूपा-

जीवाः स्नानप्रघर्षशुद्धशरीराः परिवर्तितवस्त्रालंकाराः पश्येयुः[30]। आशीतिकाः पुरुषाः पञ्चाशत्कास्त्रियो वा मातापितृव्यञ्जनाः स्थविरवर्षवराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः स्थापयेयुश्च स्वामिहिते[31]।

स्वभूमौ च वसेत्सर्वः परभूमौ न संचरेत्।
न च बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत्[32]॥
सर्वं चावेक्षितं द्रव्यं निबद्धागमनिर्गमम्।
निर्गच्छेदभिगच्छेद्वा मुद्रासंक्रान्तभूमिकम्[33]॥

इति विनयाधिकारिके प्रथमे ऽधिकरणे विंशो ऽध्यायः॥ २०॥

---

१८. प्रक. आत्मरक्षितकम्.

शयनादुत्थितः स्त्रीगणैर्धन्विभिः परिगृह्येत[1]। द्वितीयस्यां कक्ष्यायां कञ्चुकोष्णीषिभिर्वर्षवराभ्यागारिकैः[2]। तृतीयस्यां कुब्जवामनकिरातैः[3]। चतुर्थ्यां मन्त्रिभिः संबन्धिभिर्दौवारिकैश्च प्रासपाणिभिः[4]। पितृपैतामहं महासंबन्धानुबन्धं शिक्षितमनुरक्तं कृतकर्माणं जनमासन्नं कुर्वीत[5]। नान्यतोदेशीयमकृतार्थमानं स्वदेशीयं वाप्यपकृत्योपगृहीतमन्तर्वंशिकसैन्यं राजानमन्तःपुरं च रक्षेत्[6]।

गुप्ते देशे माहानसिकः सर्वमास्वादबाहुल्येन कर्म कारयेत्[7]। तद्राजा तथैव प्रतिभुञ्जीत पूर्वमग्नये वयोभ्यश्च बलिं कृत्वा[8]।

अग्नेर्ज्वालाधूमनीलता शब्दस्फोटनं च विषयुक्तस्य[9]। वयसां विपत्तिश्च[10]। अन्नस्योष्मा मयूरग्रीवाभः शैत्यमाशुक्लिष्टस्येव वैवर्ण्यं सोदकत्वमक्लिन्नत्वं च[11]। व्यञ्जनानामाशुशुष्कत्वं च क्वाथश्यामफेनपटलविच्छिन्नभावो गन्धस्पर्शरसवधश्च[12]। द्रव्येषु हीनातिरिक्तच्छायादर्शनम्[13]। फेनपटलसीमान्तोर्ध्वराजीदर्शनं च[14]। रसस्य मध्ये नीला राजी पयसस्ताम्रा मद्यतोययोः कालीदध्नः श्यामा च मधुनः श्वेता[15]। द्रव्याणामार्द्राणामाशुप्रम्लानत्वमुत्पक्वभावः क्वाथनीलश्यावता च[16]। शुष्काणामाशुशातनं वैवर्ण्यं

च[17] । कठिनानां मृदुत्वं मृदूनां कठिनत्वं च[18] । तदभ्याशे क्षुद्रसत्त्ववधश्च[19] । आस्तरणप्रावरणानां श्याममण्डलता तन्तुरोमपक्ष्मशातनं च[20] । लोहमणिमयानां पङ्कमलोपदेहता[21] । स्नेहरागगौरवप्रभाववर्णस्पर्शवधश्चेति विषयुक्तलिङ्गानि[22] । विषप्रदस्य तु शुष्कश्याववक्त्रता वाक्सङ्गः स्वेदो विजृम्भणं चातिमात्रं वेपथुः प्रस्खलनं वाक्यविप्रेक्षणमावेगः स्वकर्मणि स्वभूमौ चानवस्थानमिति[23] । तस्मादस्य जाङ्गलीविदो भिषजश्चासन्नाः स्युः[24] । भिषग्भैषज्यागारादास्वादविशुद्धमौषधं गृहीत्वा पाचकपोषकाभ्यामात्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत्[25] । पानं पानीयं चौषधेन व्याख्यातम्[26] । कल्पकप्रसाधकाः स्नानशुद्धवस्त्रहस्ताः समुद्रमुपकरणमन्तर्वंशिकहस्तादादाय परिचरेयुः[27] । स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः[28] । ताभिरधिष्ठिता वा शिल्पिनः[29] । आत्मचक्षुषि निवेश्य वस्त्रमाल्यं दद्युः[30] । स्नानानुलेपनप्रघर्षचूर्णवासस्नानीयानि स्ववक्षोबाहुषु च[31] । एतेन परस्मादागतकं च व्याख्यातम्[32] । कुशीलवाः शस्त्राग्निरसवर्जं नर्मयेयुः[33] । आतोद्यानि चैषामन्तस्तिष्ठेयुरश्वरथद्विपालंकाराश्च[34] । मौलपुरुषाधिष्ठितं यानवाहनमारोहेत्[35] । नावं चाप्तनाविकाधिष्ठिताम्[36] । अन्यनौप्रतिबद्धां वातवेगवशां च नोपेयात्[37] । उदकान्ते सैन्यमासीत[38] । मत्स्यग्राहविशुद्धमवगाहेत[39] । व्यालग्राहपरिशुद्धमुद्यानं गच्छेत्[40] । लुब्धकैः श्वगणिभिरपास्तस्तेनव्यालपराबाधभयं चललक्षपरिचयार्थं मृगारण्यं गच्छेत्[41] । आप्तशस्त्रग्राहाधिष्ठितः सिद्धतापसं पश्येत्[42] । मन्त्रिपरिषदा सामन्तदूतं संनद्धोऽश्वं हस्तिनं रथं वारूढः संनद्धमनीकं गच्छेत्[43] निर्याणेऽभियाने च राजमार्गमुभयतः कृतारक्षं दण्डिभिरपास्तशस्त्रहस्तप्रव्रजितव्यङ्गं गच्छेत्[44] । न पुरुषसंबाधमवगाहेत[45] ।

यात्रासमाजोत्सवप्रवहणानि दशवर्गिकाधिष्ठितानि गच्छेत्[46] ।

यथा च योगपुरुषैरन्यान्राजाधितिष्ठति ।
तथायमन्यबाधेभ्यो रक्षेदात्मानमात्मवान् ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे आत्मरक्षितकम् एकविंशोऽध्यायः ॥२१॥

एतावता कौटिलीयस्यार्थशास्त्रस्य विनयाधिकारिकं प्रथममधिकरणं समाप्तम् ॥

# अध्यक्षप्रचारः--द्वितीयाधिकरणम्.

१९. प्रक. जनपदनिवेशः.

भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्[१] । शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत्[२] । नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषु सीमां स्थापयेत्[३] । अष्टशतग्राम्या मध्ये स्थानीयं चतुःशतग्राम्या द्रोणमुखं द्विशतग्राम्या खार्वटिकं दशग्रामीसंग्रहेण संग्रहणं स्थापयेत्[४] । अन्तेष्वन्तपालदुर्गाणि[५] । जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत्[६] । तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः[७] । ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत्[८] । अध्यक्षसंख्यायकादिभ्यो गोपस्थानीकानीकस्थचिकित्सकाश्वदमकजङ्घारिकेभ्यश्च विक्रयाधानवर्जम्[९] ।

करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत्[१०] । अकृतानि कर्तृभ्यो नादेयात्[११] । अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्[१२] । ग्रामभृतकवैदेहका वा कृषेयुः[१३] । अकृषन्तोऽपहीनं दद्युः[१४] । धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात्तान्यनुसुखेन दद्युः[१५] । अनुग्रहपरिहारौ

चेभ्यः कोशवृद्धिकरौ दद्यात्[१६] । कोशोपघातिकौ वर्जयेत्[१७] । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । निवेशसमकालं यथागतकं वा परिहारं दद्यात्[१६] । निवृत्तपरिहारान्पितेवानुगृह्णीयात्[२०] । आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान्वारिस्थलपथपण्यपत्तनानि च निवेशयेत्[२१] । सहोदकमाहार्योदकं वा सेतुं बन्धयेत्[२२] । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्[२३] । पुण्यस्थानारामाणां च[२४] । संभूय सेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः[२५] । व्ययकर्मणि च भागी स्यात्[२६] । न चांशं लभेत्[२७] । मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत्[२८] । दासाहितकबन्धूनशृण्वतो राजा विनयं ग्राहयेत्[२६] । बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्[३०] । स्त्रियमप्रजातां प्रजातायाश्च पुत्रान्[३१] । बालद्रव्यं ग्रामवृद्धा वर्धयेयुराव्यवहारप्रापणात्[३२] । देवद्रव्यं च[३३] । अपत्यदारं मातापितरौ भ्रातृनप्राप्तव्यवहारान्भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः[३४] । अन्यत्र मातुः[३५] । पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वः साहसदण्डः[३६] । स्त्रियं च प्रव्राजयतः[३७] । लुप्तव्यवायः प्रव्रजेदापृच्छ्य धर्मस्थान्[३८] । अन्यथा नियम्येत[३६] । वानप्रस्थादन्यः प्रव्रजितभावः सजातादन्यः संघः सामुत्थायिकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिवेशेत[४०] । न च तत्रारामविहारार्थाः शालाः स्युः[४१] । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः[४२] । निराश्रयत्वाद्ग्रामाणां क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति[४३] ।

परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं परिहरेद्राजा व्ययक्रीडाश्च वारयेत्[४४] ॥

दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान्[४५] ॥

वल्लभैः कार्मिकैः स्तेनैरन्तपालैश्च पीडितम् ।
शोधयेत्पशुसंघैश्च क्षीयमाणवणिक्पथम्[४६] ॥
एवं द्रव्यंद्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत्पूर्वकृतान्राजा नवांश्चाभिप्रवर्तयेत्[४७] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे जनपदनिवेशः प्रथमो ऽध्यायः ॥१॥
आदितो द्वाविंशः ॥२२॥

## २०. प्रक. भूमिच्छिद्रविधानम्.

अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत्[१] । प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि तपोवनानि च तपस्विभ्यो गोत्रकपराणि प्रयच्छेत्[२] । तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफलगुल्मगुच्छमकण्टकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्ननखदंष्ट्रव्यालमार्गायुकहस्तिहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत्[३] । सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत्[४] । कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत्[५] । द्रव्यवनकर्मान्तानटवीश्च द्रव्यवनापाश्रयाः प्रत्यन्ते हस्तिवनमटव्या रक्ष्यं निवेशयेत्[६] । नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्रवेशनिष्कसनं नागवनपालैः पालयेत्[७] । हस्तिघातिनं हन्युः । दन्तयुगं स्वयं मृतस्याहरतः सपादचतुष्पणो लाभः[८] । नागवनपाला हस्तिपकपादपाशिकसैमिकवनचरकपारिकार्मिकसखा हस्तिमूत्रपुरीषच्छन्नगन्धा भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह चरन्तः शय्यास्थानपद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं विद्युः[१०] । यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बन्धमुक्तं च निबन्धेन विद्युः[११] । अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान्हस्तिनो गृह्णीयुः[१२] । हस्तिप्रधानो हि विजयो राज्ञाम्[१३] । परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहर-

कर्मणि हस्तिन इति[१४]।

कलिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याश्चेति करूशजाः ।
दशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः[१५] ॥
सौराष्ट्रिकाः पाञ्चजनाः तेषां प्रत्यवरास्मृताः ।
सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते[१६] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे भूमिच्छिद्रविधानं द्वितीयो ऽध्यायः ॥२॥

आदितस्त्रयं विंशः ॥ २३ ॥

## २१. प्रक. दुर्गविधानम् ।

चतुर्दिशं जनपदान्ते सांपरायिकं दैवकृतं दुर्गं कारयेत् । अन्तर्द्वीपं स्थलं वा निम्नावरुद्धमौदकं प्रस्तरं गुहां वा पार्वतं निरुदकस्तम्बमिरिणं वा धान्वनं खजनोदकं स्तम्बगहनं वा वनदुर्गम्[२] । तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानं धान्वनवनदुर्गमटवीस्थानम्[३] । आपद्यपसारो वा जनपदमध्ये समुदयस्थानं स्थानीयं निवेशयेत् । वास्तुकप्रशस्ते देशे नदीसङ्गमे ह्रदस्य वाविशोषस्याङ्के सरसस्तटाकस्य वा वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन प्रदक्षिणोदकं पण्यपुटभेदनमंसवारिपथाभ्यामुपेतम्[५] । तस्य परिखास्तिस्रो दण्डान्तराः कारयेत्[६] । चतुर्दश द्वादश दशेति दण्डान्विस्तीर्णाः विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूला मूले चतुरश्राः पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा तोयान्तिकीरागन्तुतोयपूर्णा वा सपरिवाहाः पद्मग्राहवतीश्च । चतुर्दण्डावकृष्टं परिखायाः षड्दण्डोच्छ्रितमवरुद्धं तद्द्विगुणविष्कम्भं खाताद्वप्रं कारयेत् । ऊर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा हस्तिभिर्गोभिश्च क्षुण्णं कण्टकिगुल्मविषवल्लीप्रतानवन्तं पांसुविशेषेण वास्तुच्छिद्रं वा पूरयेत्। वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजं युग्मं वा आ चतुर्विंशतिहस्तादिति कारयेत् । रथचर्यासंचारं तालमूलमुरजकैः कपि-

शीर्षकैश्चाचिताग्रं पृथुशिलासहितं वा शैलं कारयेत्[11]। न त्वेव काष्ठमयम्[12]। अग्निरवहितो हि तस्मिन्वसति[13]। विष्कम्भचतुरश्रमट्टालकमुत्सेधसमावक्षेपसोपानं कारयेत्[14]। त्रिंशद्दण्डान्तरं च द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलां द्व्यर्धायामां प्रतोलीं कारयेत्[15]। अट्टालकप्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सापिधानच्छिद्रफलकसंहतामितीन्द्रकोशं कारयेत्[16]। अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायाममनुप्राकारमष्टहस्तायतं देवपथं कारयेत्[17]। दण्डान्तरा द्विदण्डान्तरा वा चार्याः कारयेत्[18]। अग्राह्ये देशे प्रधावितिकां निष्कुरद्वारं च[19]। बहिर्जानुभञ्जनीं त्रिशूलप्रकारकूटावपातकण्टकप्रतिसराहिपृष्ठतालपत्रशृङ्गाटकश्वदंष्ट्रार्गलोपस्कन्दनपादुकाम्बरीषोदपानकैः छन्नपथं कारयेत्[20]। प्राकारमुभयतो मण्डलकमध्यर्धदण्डं कृत्वा प्रतोलीषट्तुलान्तरं द्वारं निवेशयेत्[21]। पञ्चदण्डादेकोत्तरवृद्ध्याष्टदण्डादिति चतुरश्रं षड्भागमायामादधिकमष्टभागं वा[22]। पञ्चदशहस्तादेकोत्तरमष्टादशहस्तादिति तलोत्सेधः[23]। स्तम्भस्य परिक्षेपः षडायामो द्विगुणो निखातः चूलिकायाश्चतुर्भागः[24]। आदितलस्य पञ्च भागाः शाला वापी सीमागृहं च[25]।

दशभागिकौ द्वौ प्रतिमञ्चौ[26]। अन्तरमाणिहर्म्यं च समुच्छ्रयादर्धतलं स्थूणावबन्धश्च[27]। आर्धवास्तुकमुत्तमागारं त्रिभागान्तरं वा[28]। इष्टकावबन्धपार्श्वम्[29]। वामतः प्रदक्षिणसोपानं गूढभित्तिसोपानमितरतः[30]। द्विहस्तं तोरणशिरः[31]। त्रिपञ्चभागिकौ द्वौ कवाटयोगौ[32]। द्वौ द्वौ परिघौ[33]। अरत्निरिन्द्रकीलः[34]। पञ्चहस्तमाणिद्वारम्[35]। चत्वारो हस्तिपरिघाः[36]। निवेशार्धं हस्तिनखः मुखसमः संक्रमोऽसंहार्यो वा भूमिमयो वा निरुदके[37]।

प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत्[38]।

प्राकारमध्ये कृत्वा वापीं पुष्करिणीं द्वारं चतुःशालमध्यर्धान्तराणीकं कुमारीपुरं मुण्डहर्म्यं द्वितलं मुण्डकद्वारं भूमि-

द्रव्यवशेन वा त्रिभागाधिकायामाः भाण्डवाहिनी कुल्याः कारयेत्[३८] ।

तासु पाषाणकुद्दालकुठारीकाण्डकल्पनाः ।
भुशुण्डीमुद्गरा दण्डचक्रयन्त्रशतघ्न्यः[४०] ॥
कार्याः कार्मारिकाः शूला वेधनाग्राश्च वेणवः ।
उष्ट्रग्रीव्यो ऽग्निसंयोगाः कुप्यकल्पे च यो विधिः[४१] ।

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे दुर्गविधानं तृतीयो ऽध्यायः ॥ ३ ॥
आदितश्चतुर्विंशः ॥ २४ ॥

---

## २२. प्रक. दुर्गनिवेशः ।

त्रयः प्राचीना राजमार्गास्त्रय उदीचीना इति वास्तुविभागः[१]। स द्वादशद्वारो युक्तोदकभूमिच्छन्नपथः[२] । चतुर्दण्डान्तरा रथ्या-राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः[३] । सयोनीयव्यूहश्म-शानग्रामपथाश्चाष्टदण्डाः[४] । चतुर्दण्डः सेतुवनपथः[५] । द्विदण्डो हस्तिक्षेत्रपथः[६] । पञ्चारत्नयो रथपथश्चत्वारः पशुपथः[७] । द्वौ क्षुद्रपशु-मनुष्यपथः[८] । प्रवीरे वास्तुनि राजनिवेशः[९] । चातुर्वर्ण्यसमाजीवे वास्तुहृदयादुत्तरे नवभागे यथोक्तविधानमन्तःपुरं प्राङ्मुखमुदङ्मुखं वा कारयेत्[१०] । तस्य पूर्वोत्तरं भागमाचार्यपुरोहितेज्यातोयस्थानं मन्त्रिणश्चावसेयुः[११] । पूर्वदक्षिणं भागं महानसं हस्तिशाला कोष्ठा-गारं च[१२] । ततः परं गन्धमाल्यधान्यरसपण्याः प्रधानकारवः क्षत्रि-याश्च पूर्वां दिशमधिवसेयुः[१३]। दक्षिणपूर्वं भागं भाण्डागारमक्षपटलं कर्मनिषद्याश्च[१४] । दक्षिणपश्चिमं भागं कुप्यगृहमायुधागारं च[१५] । ततः परं नगरधान्यव्यावहारिककार्मान्तिकबलाध्यक्षाः पक्वान्नसुरा-मांसपण्याः रूपाजीवास्तालापचारा वैश्याश्च दक्षिणां दिशम-धिवसेयुः[१६] । पश्चिमदक्षिणं भागं खरोष्ट्रगुप्तिस्थानं कर्मगृहं च[१७] । पश्चिमोत्तरं भागं यानरथशालाः[१८] । ततः परमूर्णासूत्रवेणुचर्मवर्म-शस्त्रावरणकारवः शूद्राश्च पश्चिमां दिशमधिवसेयुः[१९] । उत्तरपश्चिमं

भागं पण्यभैषज्यगृहम्[20] । उत्तरपूर्वं भागं कोशो गवाश्वं च[21] । ततः परं नगरराजदेवतालोहमणिकारवो ब्राह्मणाश्चोत्तरां दिशमधिवसेयुः[22] । वास्तुच्छिद्रानुलासेषु श्रेणीप्रवहणीनिकाया आवसेयुः[23] । अपराजिताप्रतिहतजयन्तवैजयन्तकोष्ठकान् शिववैश्रवणाश्विश्रीमदिरागृहं च पुरमध्ये कारयेत्[24] । कोष्ठकालयेषु यथोद्देशं वास्तुदेवताः स्थापयेत्[25] । ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि बहिः परिखायाः धनुःशतापकृष्टाश्चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः[26] । यथादिशं च दिग्देवताः[27] । उत्तरः पूर्वो वा श्मशानवाटः[28] । दक्षिणेन वर्णोत्तराणाम्[29] । तस्यातिक्रमे पूर्वः साहसदण्डः[30] । पाषण्डचण्डालानां श्मशानान्ते वासः[31] । कर्मान्तक्षेत्रवशेन वा कुटुम्बिनां सीमानं स्थापयेत्[32] । तेषु पुष्पफलवाटषण्डकेदारान्धान्यपण्यनिचयांश्चानुज्ञाताः कुर्युः[33] । दशकुलीवाटं कूपस्थानं सर्पिस्नेहधान्यक्षारलवणभैषज्यशुष्कशाकयवसवल्लूरतृणकाष्ठलोहचर्माङ्गारस्नायुविषविषाणवेणुवल्कलसारदारुप्रहरणावरणाश्मनिचयाननेकवर्षोपभोगसहान्कारयेत्[34] । नवेनानवं शोधयेत्[35] ।

हस्त्यश्वरथपादातमनेकमुख्यमवस्थापयेत्[36] । अनेकमुख्यं हि परस्परभयात्परोपजापं नोपैतीति[37] ।

एतेनान्तपालदुर्गसंस्कारा व्याख्याताः[38] ।

न च बाहिरिकान्कुर्यात्पुरराष्ट्रोपघातकान् ।
क्षिपेज्जनपदे चैतान्सर्वान्वा दापयेत्करान्[39] ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे दुर्गनिवेशश्चतुर्थोऽध्यायः ॥ ४ ॥
आदितः पञ्चविंशः ॥ २५ ॥

---

२३. प्रक. संनिधातृचयकर्म ।

संनिधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् । चतुरश्रां वापीमनुदकोपस्नेहां खानयित्वा पृथुशिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सारदारु-

पञ्जरं भूमिसमं त्रितलमनेकविधानं कुट्टिमदेशस्थानतलमेकद्वारं यन्त्रयुक्तसोपानं देवताविधानं भूमिगृहं कारयेत्[2] । तस्योपर्युभयतोनिषेधं सप्रग्रीवमैष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत्[3]। प्रासादं वा जनपदान्ते ध्रुवनिधिमापदर्थमभित्यक्तैः पुरुषैः कारयेत्[4]। पक्वेष्टकास्तम्भं चतुःशालमेकद्वारमनेकस्थानतलं विवृतस्तम्भापसारमुभयतः पण्यगृहं कोष्ठागारं च दीर्घबहुलशालं कक्ष्यावृतकुड्यमन्तःकुप्यगृहं तदेव भूमिगृहयुक्तमायुधागारं पृथग्धर्मस्थीयं महामात्रीयं विभक्तस्त्रीपुरुषस्थानमपसारतः सुगुप्तकक्ष्यं बन्धनागारं कारयेत्[5] । सर्वेषां शालाखातोदपानवच्च स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षास्था दैवपूजनयुक्ताः कारयेत्[6] । कोष्ठागारे वर्षमानमरत्निमुखं कुण्डं स्थापयेत्[7]। तज्जातकरणाधिष्ठितः पुराणं नवं च रत्नं सारं फल्गुकुप्यं वा प्रतिगृह्णीयात्[8] । तत्र रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च[9] । सारोपधौ मध्यमः[10] । फल्गुकुप्योपधौ तच्च तावच्च दण्डः[11] । रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात्[12] । अशुद्धं छेदयेत्[13] । आहर्तुः पूर्वः साहसदण्डः[14] । शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात्[15] । विपर्यये मूलद्विगुणो दण्डः[16] । तेन पण्यं कुप्यमायुधं च व्याख्यातम्[17] । सर्वाधिकरणेषु युक्तोपयुक्ततत्पुरुषाणां पणादिचतुष्पणपरमापहारेषु पूर्वमध्यमोत्तमवधा दण्डाः[18] । कोशाधिष्ठितस्य कोशावच्छेदे घातः[19] । तद्वैयावृत्यकराणामर्धदण्डः[20] । परिभाषणमविज्ञाने[21] । चोराणामभिप्रधर्षणे चित्रो घातः[22] । तस्मादाप्तपुरुषाधिष्ठितः संनिधाता निचयाननुतिष्ठेत्[23] ।

बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि ।
यथा पृष्टो न सज्जेत व्ययशेषं च दर्शयेत्[24] ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे संनिधातृनिचयकर्म पञ्चमोऽध्यायः ॥ ५ ॥
आदितः षड्विंशः ॥ २६ ॥

## २४. प्रक. समाहर्तृसमुदयप्रस्थापनम् ॥

समाहर्ता दुर्गं[1] राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत । शुल्कं दण्डः पौतवं नागरिको लक्षणाध्यक्षो मुद्राध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारं सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो द्वारबाहिरिकादेयं च दुर्गम्[2] । सीता भागो बलिः करो वणिक् नदीपालस्तरो नावः पट्टनं विवीतं वर्तनी रज्जूश्चोररज्जूश्च राष्ट्रम्[3] । सुवर्णरजतवज्रमणिमुक्ताप्रवालशङ्खलोहलवणभूमिप्रस्तररसधातवः खनिः[4] । पुष्पफलवाटषण्डकेदारमूलवापाः सेतुः[5] । पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम्[6] । गोमहिषमजाविकं खरोष्ट्रमश्वाश्वतराश्च व्रजः[7] । स्थलपथो वारिपथश्च वणिक्पथं[8] । इत्यायशरीरम्[9] । मूलं भागो व्याजी परिघः क्लृप्तं रूपिकमत्ययश्चायमुखम्[10] । देवपितृपूजादानार्थं स्वस्तिवाचनमन्तःपुरं महानसं दूतप्रवर्तनं कोष्ठागारमायुधागारं पण्यगृहं कुप्यगृहं कर्मान्तो विष्टिः पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्यालवाटाः काष्ठतृणवाटाश्चेति व्ययशरीरम्[11] । राजवर्षं मासः पक्षो दिवसश्च व्युष्टं वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाः शेषाः पूर्णाः पृथगधिमासक इति कालः[12] । करणीयं सिद्धं शेषमायव्ययौ नीवी च[13] । संस्थानं प्रचारः शरीरावस्थापनमादानं सर्वसमुदयपिण्डसंजातमेतत्करणीयम्[14] । कोशार्पितं राजहारः पुरव्ययश्चाप्रविष्टः परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चापातनीयमेतत्सिद्धम्[15] । सिद्धिप्रकर्मयोगः दण्डशेषमाहरणीयं बलात्कृतप्रतिस्तब्धमवसृष्टं च प्रशोध्यमेतच्छेषमसारमल्पसारं च[16] । वर्तमानः पर्युषितोऽन्यजातश्चायः[17] । दिवसानुवृत्तो वर्तमानः[18] । परमसांवत्सरिकः परप्रचारः संक्रान्तो वा पर्युषितः[19] । नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं डमरगतकस्वमपुत्रकं निधिश्चान्यजातः[20] । विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्ययः[21] । विक्रये पण्यानामर्घवृद्धिरुपजा मानोन्मानविशेषो व्याजी क्रयसंघर्षे वा

वृद्धिरित्यार्थः[२२]। नित्यो नित्योत्पादिको लाभो लाभोत्पादिक इति व्ययः[२३]। दिवसानुवृत्तो नित्यः[२४]। पक्षमाससंवत्सरलाभो लाभः[२५]। तयोरुत्पन्नो नित्योत्पादिको लाभोत्पादिक इति व्ययः[२६]। संजातादायव्ययविशुद्धा नीवी प्राप्ता चानुवृत्ता चेति[२७]।

एवं कुर्यात्समुदयं वृद्धिं चायस्य दर्शयेत्।
ह्रासं व्ययस्य च प्राज्ञः साधयेच्च विपर्ययम्[२८]॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे समाहर्तृसमुदयप्रस्थापनं षष्ठोऽध्यायः ॥६॥
आदितः सप्तविंशः ॥ २७ ॥

---

२५. प्रक. अक्षपटले गाणनिक्याधिकारः ॥

अक्षपटलमध्यक्षः प्राङ्मुखमुदङ्मुखं वा विभक्तोपस्थानं निबन्धपुस्तकस्थानं कारयेत्[१]। तत्राधिकरणानां संख्यां प्रचारसंजाताग्रं कर्मान्तानां द्रव्यप्रयोगे वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणं रत्नसारफल्गुकुप्यानामर्घप्रतिवर्णकप्रतिमानमानोन्मानावमानभाण्डं देशग्रामजातिकुलसङ्घातानां धर्मव्यवहारचारित्रसंस्थानं राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभं राज्ञश्च पत्नीपुत्राणां रत्नभूमिलाभं निर्देशोत्पातिकप्रतीकारलाभं मित्रामित्राणां च संधिविक्रमप्रदानादानानि निबन्धपुस्तकस्थं कारयेत्[२]। ततः सर्वाधिकरणानां करणीयं सिद्धं शेषमायव्ययौ नीवीमुपस्थानं प्रचारचारित्रसंस्थानं च निबन्धेन प्रयच्छेत्[३]। उत्तममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात्[४]। सामुदायिकेष्ववक्लृप्तिकं व्ययमुपहत्य राजानुतप्येत[५]। सहग्राहिणः प्रतिभुवः कर्मोपजीविनः पुत्रा भ्रातरो भार्या दुहितरो भृत्याश्चास्य कर्मच्छेदं वहेयुः[६]। त्रिशतं चतुःपञ्चाशच्चाहोरात्राणां कर्म संवत्सरः[७]। तमाषाढीपर्यवसानमूनं पूर्णं वा दद्यात्[८]। करणाधिष्ठितमधिमासकं कुर्यात्[९]। अपसर्पाधिष्ठितं च प्रचारं प्रचारचारित्रसंस्थानान्यनुपलभमानो हि प्रकृतः समुदयमज्ञानेन परिहापयति[१०]। उत्थानक्ले-

शास्त्रासहत्वादालस्येन शब्दादिष्विन्द्रियार्थेषु प्रमादेन संक्रोशाधर्मानर्थभीरुर्भयेन कार्यार्थिष्वनुग्रहबुद्धिः कामेन हिंसाबुद्धिः कोपेन विद्याद्रव्यवल्लभापाश्रयाद्दर्पेण तुलामानतर्कगणिकान्तरोपधानाल्लोभेन[11]। तेषामानुपूर्व्या यावानर्थोपघातस्तावानेकोत्तरो दण्ड इति मानवाः[12]। सर्वत्राष्टगुण इति पाराशराः[13]। दशगुण इति बार्हस्पत्याः[14]। विंशतिगुण इत्यौशनसाः[15]। यथापराधमिति कौटिल्यः[16]। गाणनिक्यान्याषाढीमागच्छेयुः[17]। आगतानां समुद्रपुस्तभाण्डनीवीकानामेकत्रसंभाषावरोधं कारयेत्[18]। आयव्ययनीवीनामग्राणि श्रुत्वा नीवीमवहारयेत्[19]। यच्चाग्रादायस्यान्तरवर्णे नीव्या वर्धेत व्ययस्य वा यत्परिहापयेत्तदष्टगुणमध्यक्षं दापयेत्[20]। विपर्यये तमेव प्रतिस्यात्[21]। यथाकालमनागतानामपुस्तनीविकानां वा देयदशबन्धो दण्डः[22]। कार्मिके चोपस्थिते कारणिकस्याप्रतिबध्नतः पूर्वः साहसदण्डः[23]। विपर्यये कार्मिकस्य द्विगुणः[24]। प्रचारसमं महामात्राः समग्राः श्रावयेयुः[25]। अविषममन्त्रः पृथग्भूतो मिथ्यावादी चैषामुत्तमदण्डं दद्यात्[26]। अकृताहोरूपहरं मासमाकाङ्क्षेत[27]। मासादूर्ध्वं मासद्विशतोत्तरं दण्डं दद्यात्[28]। अल्पशेषलेख्यनीविकं पञ्चरात्रमाकाङ्क्षेत[29]। ततः परं कोशपूर्वमहोरूपहरं धर्मव्यवहारचरित्रसंस्थानसंकलननिर्वर्तनानुमानचारप्रयोगैरवेक्षेत[30]। दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च प्रतिसमानयेत्[31]। व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापकनिबन्धकप्रतिग्राहकैश्चायं समानयेत्[32]। व्युष्टदेशकालमुखलाभकारणदेययोगपरिमाणाज्ञापकोद्धारकविधातकप्रतिग्राहकैश्च व्ययं समानयेत्[33]। व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनिक्षेपभाजनगोपायकैश्च नीवीं समानयेत्[34]। राजार्थे ऽर्थकारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाज्ञानिबन्धादायव्ययमन्यथा वा विकल्पयतः पूर्वः साहसदण्डः[35]। क्रमावहीनमुत्क्रममविज्ञातं पुनरुक्तं वा वस्तुकमवलिहतो द्वादशपणो दण्डः[36]। नीवीमवलिखतो द्विगुणः[37]। भक्षयतो ऽष्टगुणः[38]। नाश-

यतः पञ्चबन्धः प्रतिदानं च[३९] । मिथ्यावादे स्तेयदण्डः[४०] ।
पश्चात्प्रतिज्ञाते द्विगुणः प्रस्मृतोत्पन्ने च[४१] ।

अपराधं सहेताल्पं तुष्येदल्पे ऽपि चोदये ।
महोपकारं चाध्यक्षं प्रग्रहेणाभिपूजयेत्[४२] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे अक्षपटले गाणनिक्याधिकारः सप्तमो ऽध्यायः ॥ ७ ॥ आदितो ऽष्टाविंशः ॥२८॥

## २६ प्रक. समुदयस्य युक्तापहृतस्य प्रत्यानयनम्.

कोशपूर्वाः सर्वारम्भाः । तस्मात्पूर्वं कोशमवेक्षेत । प्रचार-समृद्धिश्चरित्रानुग्रहश्चोरनिग्रहो युक्तप्रतिषेधः सस्यसंपत्पण्यबाहु-ल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्योपायनमिति कोशवृद्धिः[३] । प्रतिबन्धः प्रयोगो व्यवहारो ऽवस्तारः परिहापणमुपभोगः परि-वर्तनमपहारश्चेति कोशक्षयः । सिद्धीनामसाधनमनवतारणमप्रवे-शनं वा प्रतिबन्धः । तत्र दशबन्धो दण्डः[५] । कोशद्रव्याणां वृद्धिप्रयोगाः प्रयोगः । पण्यव्यवहारो व्यवहारः । तत्र फलद्वि-गुणो दण्डः । सिद्धं कालमप्राप्तं करोत्यप्राप्तं प्राप्तं वेत्यवस्तारः । तत्र पञ्चबन्धो दण्डः[१०] । क्लृप्तमायं परिहापयति व्ययं वा विवर्धयतीति परिहापणम्[११] । तत्र हीनचतुर्गुणो दण्डः[१२] । स्वयम-न्यैर्वा राजद्रव्याणामुपभोजनमुपभोगः[१३] । तत्र रत्नोपभोगे घातः सारोपभोगे मध्यमः साहसदण्डः फल्गुकुप्योपभोगे तच्च तावच्च दण्डः[१४] । राजद्रव्याणामन्यद्रव्येणादानं परिवर्तनम्[१५] । तदुपभोगेन व्याख्यातम्[१६] । सिद्धमायं न प्रवेशयति[१७] । निबद्धं व्ययं न प्रयच्छति[१८] । प्राप्तां नीवीं विप्रतिजानीत इत्यपहारः[१९] । तत्र द्वादशगुणो दण्डः[२०] । तेषां हरणोपायाश्चत्वारिंशत्[२१] । पूर्वं सिद्धं पश्चादवतारितम्[२२] । पश्चात्सिद्धं पूर्वमवतारितम्[२३] । साध्यं न सिद्धम्[२४] । असाध्यं सिद्धम्[२५] । सिद्धमसिद्धं कृतम्[२६] । असिद्धं सिद्धं कृतम्[२७] । अल्पसिद्धं बहुकृतम्[२८] । बहुसिद्धमल्पं कृतम्[२९] । अन्यत्सिद्धमन्यत्कृ-

तम्[३०]। अन्यतः सिद्धमन्यतः कृतम्[३१]। देयं न दत्तम्[३२]। अदेयं दत्तम्[३३]। काले न दत्तम्[३४]। अकाले दत्तम्[३५]। अल्पं दत्तं बहुकृतम्[३६]। बहु दत्तमल्पं कृतम्[३७]। अन्यद्दत्तमन्यत्कृतम्[३८]। अन्यतो दत्तमन्यतः कृतम्[३९]। प्रविष्टमप्रविष्टं कृतम्[४०]। अप्रविष्टं प्रविष्टं कृतम्[४१]। कुप्यमदत्तमूल्यं प्रविष्टम्[४२]। दत्तमूल्यं न प्रविष्टम्[४३]। संक्षेपो विक्षेपः कृतः[४४]। विक्षेपः संक्षेपो वा[४५]। महार्घमल्पार्घेण परिवर्तितम्[४६]। अल्पार्घं महार्घेण वा[४७]। समारोपितोऽर्घः[४८]। प्रत्यवरोपितो वा[४९]। रात्रयः समारोपिता वा[५०]। प्रत्यवरोपिता वा[५१]। संवत्सरो मासविषमः कृतः[५२]। मासो दिवसविषमो वा[५३]। समागमविषमः[५४]। मुखविषमः[५५]। धार्मिकविषमः[५६]। निर्वर्तनविषमः[५७]। पिण्डविषमः[५८]। वर्णविषमः[५९]। अर्घविषमः[६०]। मानविषमः[६१]। मापनविषमः[६२]। भाजनविषमः[६३]। इति हरणोपायाः[६४]। तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रिवैयावृत्यकरानेकैकशोऽनुयुञ्जीत[६५]। मिथ्यावादे चैषां युक्तसमो दण्डः[६६]। प्रचारे चापघोषयेत्[६७]। अमुना प्रकृतेनोपहताः प्रज्ञापयन्त्विति[६८]। प्रज्ञापयतो यथोपघातं दापयेत्[६९]। अनेकेषु चाभियोगेष्वपव्ययमानः सकृदेव परोक्तः सर्वं भजेत[७०]। वैषम्ये सर्वत्रानुयोगं दद्यात्[७१]। महत्यार्थापहारे चाल्पेनापि सिद्धः सर्वं भजेत्[७२]। कृतप्रतिघातावस्थः सूचको निष्पन्नार्थः षष्ठमंशं लभेत[७३]। द्वादशमंशं भृतकः[७४]। प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत[७५]। अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत[७६]। न चानुग्राह्यः[७७]।

निष्पत्तौ निक्षिपेद्वादमात्मानं वापवाहयेत्।
अभियुक्तोपजापात्तु सूचको वधमाप्नुयात्[७८]॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे समुदयस्य युक्तापहृतस्य प्रत्यानयनमष्टमोऽध्यायः॥ ८ ॥ आदितः एकोनत्रिंशः॥ २९॥

---

२७ प्रक. उपयुक्तपरीक्षा.

अमात्यसंपदोपेताः सर्वाध्यक्षाः शक्तितः कर्मसु नियोज्याः। कर्मसु चैषां नित्यं परीक्षां कारयेत्। चित्तानित्यत्वान्मनुष्याणा-

मू[३]। अश्वसधर्माणो[४] हि मनुष्या नियुक्ताः कर्मसु विकुर्वते । तस्मा-
त्कर्तारं करणं देशं कालं कार्यं प्रक्षेपमुदयं चैषु[५] विद्यात् । ते
यथासंदेशमसंहता अविगृहीताः कर्माणि कुर्युः[६] । संहता भक्ष-
येयुः[७] । विगृहीता विनाशयेयुः । न चानिवेद्य भर्तुः किंचिदारम्भं
कुर्युरन्यत्रापत्प्रतीकारेभ्यः[८] । प्रमादस्थानेषु[९] चैषामत्ययं स्थापये-
द्दिवसवेतनव्ययद्विगुणम्[१०] । यश्चैषां यथादिष्टमर्थं सविशेषं वा
करोति स स्थानमानौ लभेत[११] । अल्पायतिश्चेन्महाव्ययो भक्ष-
यति[१२] । विपर्यये यथायतिव्ययश्च न भक्षयतीत्याचार्याः[१३] ।
अपसर्पेणैवोपलभ्यत इति कौटिल्यः[१४] । यः समुदयं परिहापयति
स राजार्थं भक्षयति[१५] । स चेदज्ञानादिभिः परिहापयति
तदेनं यथागुणं दापयेत्[१६] । यः समुदयं द्विगुणमुद्भावयति स
जनपदं भक्षयति[१७] । स चेद्राजार्थमुपनयत्यल्पापराधे वार-
यितव्यः[१८] । महति यथापराधं दण्डयितव्यः[१९] । यः समुदयं व्यय-
मुपनयति स पुरुषकर्माणि भक्षयति[२०] । स कर्मदिवसद्रव्यमूल्य-
पुरुषवेतनापहारेषु यथापराधं दण्डयितव्यः[२१] । तस्मादस्य यो
यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यमायव्ययौ
च व्यासमासाभ्यामाचक्षीत[२२] । मूलहरतादात्विककदर्यांश्च प्रति-
षेधयेत्[२३] । यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः[२४] ।
यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः[२५] । यो भृत्यात्म-
पीडाभ्यामुपचिनोत्यर्थं स कदर्यः[२६] । स पक्षवांश्चेदनादेयः[२७] ।
विपर्यये पर्यादातव्यः[२८] । यो महत्यर्थसमुदये स्थितः कदर्यः
संनिधत्ते ऽवनिधत्ते ऽवस्रावयति वा संनिधत्ते स्ववेश्मन्यवनिधत्ते
पौरजानपदेष्ववस्रावयति परविषये तस्य सत्त्री मन्त्रिमित्र-
भृत्यबन्धुपक्षमागतिं गतिं च द्रव्याणामुपलभेत[२९] । यश्चास्य
परविषयतया संचारं कुर्यात्तमनुप्रविश्य मन्त्रं विद्यात्[३०] । सुविदिते
शत्रुशासनापदेशेनैनं घातयेत्[३१] । तस्मादस्याध्यक्षाः संख्या-
यकलेखकरूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः[३२] ।

उत्तराध्यक्षाः[33] । हस्त्यश्वरथारोहास्तेषामन्तेवासिनश्शिल्पशौचयुक्तास्सङ्ख्यायकादीनामपसर्पाः[34] । बहुमुख्यमनित्यं चाधिकरणं स्थापयेत्[35] ।

यथा ह्यनास्वादयितुं न शक्यं
जिह्वातलस्थं मधु वा विषं वा ।
अर्थस्तथा ह्यर्थचरेण राज्ञः
स्वल्पोऽप्यनास्वादयितुं न शक्यः[36] ॥
मत्स्या यथान्तः सलिले चरन्तो
ज्ञातुं न शक्याः सलिलं पिबन्तः ।
युक्तास्तथा कार्यविधौ नियुक्ता
ज्ञातुं न शक्या धनमाददानाः[37] ॥
अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।
न तु प्रच्छन्नभावानां युक्तानां चरतां गतिः[38] ॥
आस्रावयेच्चोपचितान्विपर्यस्येच्च कर्मसु ।
यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा[39] ॥
न भक्षयन्ति ये त्वर्थान्न्यायतो वर्धयन्ति च ।
नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः[40] ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे उपयुक्तपरीक्षा नवमोऽध्यायः ॥९॥
आदितस्त्रिंशः ॥३०॥

२८ प्रक. शासनाधिकारः

शासने शासनमित्याचक्षते[1] । शासनप्रधाना हि राजानः[2] । तन्मूलत्वात्संधिविग्रहयोः[3] । तस्मादमात्यसंपदोपेतः सर्वसमयविदाशुग्रन्थश्चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात्[4] । सोऽव्यग्रमना राज्ञः संदेशं श्रुत्वा निश्चितार्थं[5] लेखं विदध्यात् । देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य देशनामधेयोपचारमनीश्वरस्य[6] ।

जातिं कुलं स्थानवयःश्रुतानि
कर्मर्द्धिशीलान्यथ देशकालौ ।
यौनानुबन्धं च समीक्ष्य कार्ये
लेखं विदध्यात्पुरुषानुरूपम् ॥

अर्थक्रमः संबन्धः परिपूर्णता माधुर्यमौदार्यं स्पष्टत्वमिति लेखसंपत्। तत्र यथावदनुपूर्वक्रियाप्रधानस्यार्थस्य पूर्वमभिनिवेश इत्यर्थस्य क्रमः[९]। प्रस्तुतस्यार्थस्यानुपरोधादुत्तरस्य विधानमासमाप्तेरिति संबन्धः[१०]। अर्थपदाक्षराणामन्यूनातिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाश्रान्तपदतेति परिपूर्णता[११]। सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम्[१२]। अग्राम्यशब्दाभिधानमौदार्यम्[१३]। प्रतीतशब्दप्रयोगः स्पष्टत्वमिति[१४]। अकारादयो वर्णाः त्रिषष्टिः[१५]। वर्णसंघातः पदम्[१६]। तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति[१७]। तत्र नाम सत्त्वाभिधायि[१८]। अविशिष्टलिङ्गमाख्यातं क्रियावाचि[१९]। क्रियाविशेषकाः प्रादय उपसर्गाः[२०]। अव्ययाश्चादयो निपाताः[२१]। पदसमूहो वाक्यमर्थपरिसमाप्तौ[२२]। एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन वर्गः कार्यः[२३]। लेखकपरिसंहरणार्थ इतिशब्दो वाचिकमस्येति च[२४]।

निन्दा प्रशंसा पृच्छा च तथाख्यानमथार्थना।
प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना[२५] ॥
सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा।
एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः[२६] ॥

तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा[२७]। गुणवचनमेतेषामेव प्रशंसा[२८]। कथमेतदिति पृच्छा[२९]। एवमित्याख्यानम्[३०]। देहीत्यर्थना[३१]। न प्रयच्छामीति प्रत्याख्यानम्[३२]। अननुरूपं भवत इत्युपालम्भः[३३]। मा कार्षीरिति प्रतिषेधः[३४]। इदं क्रियतामिति चोदना[३५]। योऽहं स भवान्यन्मम द्रव्यं तद्भवत इत्युपग्रहः सान्त्वम्[३६]। व्यसनसाहाय्यमभ्यवपत्तिः[३७]। सदोषमायतिप्रदर्शनमभिभर्त्सनम्[३८]। अनुनयस्त्रिविधो ऽर्थकृतावतिक्रमे पुरुषादिव्यसने चेति[३९]।

प्रज्ञापनाज्ञापरिदानलेखा-
स्तथा परीहारनिसृष्टिलेखौ।

प्राबृत्तिकश्च प्रतिलेख एव
सर्वत्रगश्चेति हि शासनानि[४०] ॥
अनेन विज्ञापितमेवमाह तद्दीयतां चेद्यदि तत्त्वमस्ति[४१] ।
राज्ञः समीपे वरकारमाह प्रज्ञापनैषा विविधोपदिष्टा[४२] ॥
भर्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति ।
विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम्[४३] ॥
यथार्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते ।
अप्याधौ परिदाने वा भवतस्तावुपग्रहौ[४४] ॥
जातेर्विशेषेषु परेषु चैव
ग्रामेषु देशेषु च तेषु तेषु ।
अनुग्रहो यो नृपतेर्निदेशा-
त्तज्ज्ञः परीहार इति व्यवस्येत्[४५] ॥
निसृष्टिस्थापना कार्या करणे वचने तथा ।
एषा वाचिकलेखः स्याद्भवेन्नैसृष्टिकोऽपि वा[४६] ॥
द्विविधां दैवसंयुक्तां तत्त्वजां चैव मानुषीम् ।
द्विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति[४७] ॥
दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च ।
प्रतिलेखो भवेत्कार्यो यथा राजवचस्तथा[४८] ॥
यत्रेश्वरांश्चाधिकृतांश्च राजा
रक्षोपकारौ पथिकार्थमाह ।
सर्वत्रगो नाम भवेत्स मार्गे
देशे च सर्वत्र च वेदितव्यः[४९] ॥

उपायाः सामोपप्रदानभेददण्डाः[५०] । तत्र साम पञ्चविधम्[५१] । गुणसंकीर्तनं संबन्धोपाख्यानं परस्परोपकारसंदर्शनमायतिप्रदर्शनमात्मोपनिधानमिति[५२] । तत्राभिजनशरीरकर्मप्रकृतिश्रुतद्रव्यादीनां गुणागुणग्रहणं प्रशंसास्तुतिर्गुणसंकीर्तनम्[५३] । ज्ञातियौनमौखस्रौवकुलहृदयमित्रसंकीर्तनं संबन्धोपाख्यानम्[५४] । स्वपक्षपरपक्षयो-

रन्योन्योपकारसंकीर्तनं परस्परोपकारसंदर्शनम्[५५] । अस्मिन्नेवं कृत इदमावयोर्भवतीत्याशाजननमायतिप्रदर्शनम्[५६] । यो ऽहं स भवान्यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयोज्यतामित्यात्मोपनिधानमिति[५७] । उपप्रदानमर्थोपकारः[५८] । शङ्काजननं निर्भर्त्सनं च भेदः[५९] । वधः परिक्लेशो ऽर्थहरणं दण्ड इति[६०] । अकान्तिर्व्याघातः पुनरुक्तमपशब्दः संप्लव इति लेखदोषाः[६१] । तत्र कालपत्त्रकमचारुविषमविरागाक्षरत्वमकान्तिः[६२] । पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः[६३] । उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम्[६४] । लिङ्गवचनकालकारकाणामन्यथाप्रयोगो ऽपशब्दः[६५] । अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासः संप्लव इति[६६] ।

सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च ।
कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः[६७] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे शासनाधिकारः दशमो ऽध्यायः ॥ १० ॥
आदित एकत्रिंशः ॥ ३१ ॥

---

## २९ प्रक. कोशप्रवेश्यरत्नपरीक्षा.

कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात्[१] । ताम्रपर्णिकं पाण्ड्यकवाटकं पाशिक्यं कौलेयं चौर्णेयं माहेन्द्रं कार्दमिकं स्रौतसीयं ह्रादीयं हैमवतं च मौक्तिकम्[२] । शुक्तिः शङ्खः प्रकीर्णकं च योनयः[३] ।

मसूरकं त्रिपुटकं कूर्मकमर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्थकं कामण्डलुकं श्यावं नीलं[३] दुर्विद्धं चाप्रशस्तम्[४] । स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम्[५] । शीर्षकमुपशीर्षकं प्रकाण्डमवघाटकं तरलप्रतिबन्धं चेति यष्टिप्रदेशाः[६] । यष्टीनामष्टसहस्रमिन्द्रच्छन्दः[७] । ततो ऽर्धं विजयच्छन्दः[८] । चतुष्षष्टिरर्धहारः[९] । चतुष्पञ्चाशद्रश्मिकलापः[१०] । द्वात्रिंशद्गुच्छः[११] । सप्तविंशतिर्नक्षत्रमाला[१२] । चतुर्विंशतिरर्धगुच्छः[१३] । विंशतिर्माणवकः[१४] । ततो ऽर्धमर्धमाणवकः[१५] । एत एव मणिमध्या-

स्तन्माणवका भवन्ति[१६] । एकशीर्षकः शुद्धो हारः[१७] । तद्वच्छेषाः[१८] । मणिमध्योऽर्धमाणवकः[१९] । त्रिफलकः फलकहारः पञ्चफलको वा[२०] । सूत्रमेकावली शुद्धा[२१] । सैव मणिमध्या यष्टिः[२२] । हेममणिचित्रा रत्नावली[२३] । हेममणिमुक्तान्तरोऽपवर्तकः[२४] । सुवर्णसूत्रान्तरं सोपानकम्[२५] । मणिमध्यं वा मणिसोपानकं[२६] । तेन शिरोहस्तपादकटीकलापजालकविकल्पा व्याख्याताः[२७] । मणिः कौटो मौलेयकः पारसमुद्रकश्च[२८]। सौगन्धिकः पद्मरागोऽनवद्यरागः पारिजातपुष्पको बालसूर्यकः[२९]। वैडूर्य उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्त्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः[३०] । नीलावलीय इन्द्रनीलः कलायपुष्पको महानीलो जाम्बवाभो जीमूतप्रभो नन्दकः स्रवन्मध्यः शीतवृष्टिः सूर्यकान्तश्चेति मणयः[३१] । षडश्रश्चतुरश्रो वृत्तो वा तीव्ररागसंस्थानवानच्छः स्निग्धो गुरुरर्चिष्मानन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः[३२] । मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खण्डो दुर्विद्धो लेखाकीर्ण इति दोषाः[३३] । विमलकः सस्यकोऽञ्जनमूलकः पित्तकः सुलभको लोहितकोऽमृतांशुको ज्योतीरसको मैलेयक अहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरबकः शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलक इत्यन्तरजातयः[३४] । शेषाः काचमणयः[३५] । सभाराष्ट्रकं मध्यमराष्ट्रकं काश्मीरराष्ट्रकं श्रीकटनकं मणिमन्तकमिन्द्रवानकं च वज्रम्[३६] । खनिः स्रोतः प्रकीर्णकं च योनयः[३७] । मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकवर्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः[३८] । स्थूलं गुरु प्रहारसहं समकोटिकं भाजनलेखितं कुभ्रामि भ्राजिष्णु च प्रशस्तम्[३९] । नष्टकोणं निराश्रि पार्श्वापवृत्तं चाप्रशस्तम्[४०] । प्रवालकमालकन्दकं वैवर्णिकं च रक्तं पद्मरागं च करटं गर्भिणिकावर्जमिति[४१] । चन्दनं सातनं रक्तं भूमिगन्धि[४२] । गोशीर्षकं कालताम्रं मत्स्यगन्धि[४३] । हरिचन्दनं शुकपत्त्रवर्णमाम्रगन्धि[४४] । तार्णसं च[४५] । ग्रा-

मेरुकं रक्तं रक्तकालं वा बस्तमूत्रगन्धि[४६] । दैवसभेयं रक्तं पद्मगन्धि[४७] । जापकं च[४८] । जोङ्गकं रक्तं रक्तकालं वा स्निग्धम्[४९] । तारूपं च[५०] । मालेयकं पाण्डुरक्तम्[५१] । कुचन्दनं कालरूक्षमगरुकालं रक्तं रक्तकालं वा[५२] । कालपर्वतकमनवद्यवर्णं वा[५३] । कोशागारपर्वतकं कालं कालचित्रं वा[५४] । शीतोदकीयं पद्माभं कालस्निग्धं वा[५५] । नागपर्वतकं रूक्षं शैवलवर्णं वा[५६] । शाकलं कपिलमिति[५७] । लघुस्निग्धमश्यानं सर्पिस्नेहलेपि गन्धसुखं त्वगनुसार्यनुल्बणमविराग्युष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः[५८] । अगरु जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा[५९] । श्यामं दोङ्गकम्[६०] । पारसमुद्रकं चित्ररूपमुशीरगन्धि नवमालिकागन्धि वेति[६१] । गुरु स्निग्धं पेशलगन्धि निर्हार्यग्निसहमसंप्लुतधूमं समगन्धं विमर्दसहमित्यगरुगुणाः[६२] । तैलपर्णिकमशोकग्रामिकं मांसवर्णं पद्मगन्धि[६३] । जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा[६४] । ग्रामेरुकं स्निग्धं गोमूत्रगन्धि[६५] । सौवर्णकुड्यकं रक्तपीतं मातुलुङ्गगन्धि[६६] । पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति[६७] । भद्रश्रीयं पारलौहित्यकं जातीवर्णम्[६८] । आन्तरपत्यमुशीरवर्णम्[६९] । उभयं कुष्ठगन्धि चेति[७०] । कालेयकः स्वर्णभूमिजः स्निग्धपीतकः[७१] । औत्तरपर्वतको रक्तपीतक इति साराः[७२] । पिण्डक्वाथधूमसहमविरागि योगानुविधायि च[७३] । चन्दनागरुवच्च तेषां गुणाः[७४] । कान्तनावकं प्रैयकं चोत्तरपर्वतकं चर्म[७५] । कान्तनावकं मयूरग्रीवाभम्[७६] । प्रैयकं नीलपीतश्वेतलेखिबिन्दुचित्रम्[७७] । तदुभयमष्टाङ्गुलायामम्[७८] । बिसी महाबिसी च द्वादशग्रामीये[७९] । अव्यक्तरूपा दुहिलितिका चित्रा वा बिसी[८०] । परुषा श्वेतप्राया महाबिसी[८१] । द्वादशाङ्गुलायाममुभयम्[८२] । श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चारोहजाः[८३] । कपिला बिन्दुचित्रा वा श्यामिका[८४] । कालिका कपिला कपोतवर्णा वा[८५] । तदुभयमष्टाङ्गुलायामम्[८६] । परुषा कदली हस्तायता[८७] । सैव चन्द्रचित्रा चन्द्रोत्तरा[८८] । कदलीत्रिभागा शाकुला कोठ-

मण्डलाचित्रा कृतकर्णिकाजिनचित्रा चेति[९८]। सामूरं चीनसी सामूली च बाह्लवेयाः[९०]। षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरम्[९१]। चीनसी रक्तकाली पाण्डुकाली वा[९२]। सामूली गोधूमवर्णेति[९३]। सातिना नलतूला वृत्तपुच्छा चौद्राः[९४]। सातिना कृष्णा[९५]। नलतूला नलतूलवर्णा[९६]। कपिला वृत्तपुच्छा च[९७]। इति चर्मजातयः[९८]। चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम्[९९]। शुद्धं शुद्धरक्तं पक्ष्मरक्तं चाविकम्[१००]। खचितं वानचित्रं खण्डसङ्घात्यं तन्तुविच्छिन्नं च कम्बलैः[१०१]। कौचपकः कुलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं वारवाणः परिस्तोमः समन्तभद्रकं चाविकम्[१०२]। पिच्छलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम्[१०३]। अष्टप्रोतिसङ्घात्या कृष्णा भिङ्गिसी वर्षवारणमपसारक इति नैपालकम्[१०४]। संपुटिका चतुरश्रिका लम्बरा कटवानकं प्रावरकः सत्तलिकेति मृगरोम[१०५]। वाङ्गकं श्वेतं स्निग्धं दुकूलम्[१०६]। पौण्ड्रकं श्यामं मणिस्निग्धम्[१०७]। सौवर्णकुड्यकं सूर्यवर्णं मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च[१०८]। एतेषामेकांशुकमध्यर्धद्वित्रिचतुरंशुकमिति[१०९]। तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम्[११०]। मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्त्रोर्णाः[१११]। नागवृक्षो लिकुचो वकुलो वटश्च योनयः[११२]।

पीतिका नागवृक्षिका[११३]। गोधूमवर्णा लैकुची[११४]। श्वेता वाकुली[११५]। शेषा नवनीतवर्णा[११६]। तासां सौवर्णकुड्यका श्रेष्ठा[११७]। तया कौशेयं चीनपट्टाश्च चीनभूमिजा व्याख्याताः[११८]। माधुरमापरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति[११९]।

अतः परेषां रत्नानां प्रमाणं मूल्यलक्षणम्।
जातिं रूपं च जानीयान्निधानं नवकर्म च[१२०]।
पुराणप्रतिसंस्कारं कर्म गुह्यमुपस्करान्।
देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम्[१२१]॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे कोशप्रवेश्यरत्नपरीक्षा एकादशोऽध्यायः॥ ११ ॥
आदितो द्वात्रिंशः ॥ ३२ ॥

## ३० प्रक. आकरकर्मान्तप्रवर्तनम्.

आकराध्यक्षः शुल्बधातुशास्त्ररसपाकमणिरागज्ञस्तज्ज्ञसखो वा तज्जातकर्मकरोपकरणसंपन्नः किट्टमूषाङ्गारभस्मलिङ्गं वाकरं भूतपूर्वमभूतपूर्वं वा भूमिप्रस्तररसधातुमत्यर्थवर्णगौरवमुग्रगन्धरसं परीक्षेत । पर्वतानामभिज्ञातोद्देशानां बिलगुहोपत्यकालयनिगूढखातेष्वन्तःप्रस्यन्दिनो जम्बूचूततालफलपक्वहरिद्राभेदहरितालमनःशिलाक्षौद्रहिङ्गुलुकपुण्डरीकशुकमयूरपत्त्रवर्णाः सवर्णोदकौषधीपर्यन्ताश्चिक्कणा विशदा भारिकाश्च रसाः काञ्चनिकाः। अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च ताम्ररूप्ययोः शतादुपरिवेद्धारः । तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात् । पीतकास्ताम्रकास्ताम्रपीतका वा भूमिप्रस्तरधातवः प्रभिन्ना नीलराजीवन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्रा हरीतकीपद्मपत्त्रशैवलयकृत्प्लीहानवद्यवर्णा भिन्नाश्चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका अर्चिष्मन्तस्ताप्यमाना न भिद्यन्ते बहुफेनधूमाश्च सुवर्णधातवः प्रतीवापार्थास्ताम्ररूप्यवेधनाः । शङ्खकर्पूरस्फाटिकनवनीतकपोतपारावतविमलकमयूरग्रीवावर्णाः सस्यकगोमेदकगुलमत्स्यण्डिकावर्णाः कोविदारपद्मपाटलीकलायक्षौमातसीपुष्पवर्णाःससीसाः साञ्जनाः विस्रा भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः सर्वे वा लेखाबिन्दुचित्रा मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः । सर्वधातूनां गौरववृद्धौ सत्त्ववृद्धिः । तेषामशुद्धा मूढगर्भा वा तीक्ष्णमूत्रक्षारभाविता राजवृक्षवटपीलुगोपित्तरोचना महिषखरकरटमूत्रलण्डपिण्डबद्धास्तत्प्रतीवापास्तदवलेपा वा विशुद्धाः स्रवन्ति । यवमाषतिलपलाशपीलुक्षारैर्गोक्षीराजक्षीरैर्वा कदली वज्रकन्दप्रतीवापो मार्दवकरः ।

मधुमधुकमजापयः सतैलं
घृतगुडकिण्वयुतं सकन्दलीकं ।

यदपि शतसहस्रधा विभिन्नं
भवति मृदु त्रिभिरेव तन्निषेकैः[१०] ॥

गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः[११]। भारिकः स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः[१२]। काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रः सीसधातुः[१३]। ऊषरकर्बुरः पक्कलोष्ठवर्णो वा त्रपुधातुः[१४]। कुरुम्बः पाण्डुरोहितः सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः[१५]। काकाण्डभुजपत्त्रवर्णो वा वैकृन्तकधातुः[१६]। अच्छः स्निग्धः सप्रभो घोषवाञ्शीतस्तीव्रस्तनुरागश्च मणिधातुः[१७]। धातुसमुत्थितं तज्जातकर्मान्तेषु प्रयोजयेत्[१८]। कृतभाण्डव्यवहारमेकमुखमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्[१९]। आकारिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः[२०]। स्तेनमनिसृष्टोपजीविनं च बद्धं कर्म कारयेत्[२१]। भाण्डोपकारिणश्च[२२]। व्ययक्रियाभारिकमाकरं भागेन प्रक्रयेण वा दद्यात्[२३]। लाघविकमात्मना कारयेत्[२४]। लोहाध्यक्षस्ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोध्रकर्मान्तान्कारयेत्[२५]। लोहभाण्डव्यवहारं च[२६]। लक्षणाध्यक्षश्चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतमं माषबीजयुक्तं कारयेत्[२७]। पणमर्धपणं पादमष्टभागमिति[२८]। पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति[२९]। रूपदर्शकः पणयात्रां व्यावहारिकीं कोशप्रवेश्यां च स्थापयेत्[३०]। रूपिकमष्टकं शतम्[३१]। पञ्चकं शतं व्याजीम्[३२]। पारीक्षिकमष्टभागिकं शतम्[३३]। पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः[३४]। खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान्कारयेत्[३५]। पणनव्यवहारं च[३६]। लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं संगृह्णीयात्[३७]। विक्रयाच्च मूल्यं रूपं व्याजीम्[३८]।

आगन्तुलवणं षड्भागं दद्यात्[३९]। दत्तभागविभागस्य विक्रयः पञ्चकं शतं व्याजीं रूपं रूपिकं च[४०]। क्रेता शुल्कं राजपण्या-

च्छेदानुरूपं च वैधरणं दद्यात्[४१] । अन्यत्र क्रेता षट्छतमत्ययं च[४२] । विलवणमुत्तमं दण्डं दद्यात्[४३] । अनिसृष्टोपजीवी च[४४] । अन्यत्र वानप्रस्थेभ्यः[४५] । श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः[४६] । अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात्[४७] ।

एवं मूल्यं विभागं च व्याजीं परिघमत्ययम् ।
शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च[४८] ॥
खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत् ।
एवं सर्वेषु पण्येषु स्थापयेन्मुखसंग्रहम्[४९] ॥
आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते ।
पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा[५०] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे आकरकर्मान्तप्रवर्तनं द्वादशो ऽध्यायः ॥१२॥

आदितः त्रयस्त्रिंशः ॥३३॥

## ३१ प्रक. अक्षशालायां सुवर्णाध्यक्षः

सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानामसंबन्धावेशनचतुःशालामेकद्वारामक्षशालां कारयेत्[१] । विशिखामध्ये सौवर्णिकं शिल्पवन्तमभिजातं प्रात्ययिकं च स्थापयेत्[२] । जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्गशुक्तिजं जातरूपं रसविद्धमाकरोद्गतं च सुवर्णम्[३] । किञ्जल्कवर्णं मृदु स्निग्धमनुनादि भ्राजिष्णु च श्रेष्ठम्[४] । रक्तपीतकं मध्यमम्[५] । रक्तमवरम्[६] । श्रेष्ठानां पाण्डु श्वेतं चाप्राप्तकम्[७] । तद्येनाप्राप्तकं तच्चतुर्गुणेन सीसेन शोधयेत्[८] । सीसान्वयेन भिद्यमानं शुष्कपटलैर्ध्मापयेत्[९] । रूक्षत्वाद्भिद्यमानं तैलगोमये निषेचयेत्[१०] । आकरोद्गतं सीसान्वयेन भिद्यमानं पाकपत्त्राणि कृत्वा गण्डिकासु कुट्टयेत्[११] । कन्दलीवज्रकन्दकल्के वा निषेचयेत्[१२] । तुत्थोद्गतं गौडिकं काममलं कबकं चाक्रवालिकं च रूप्यम्[१३] । श्वेतं स्निग्धं मृदु च श्रेष्ठम्[१४] । विपर्यये स्फोटनं च दुष्टम्[१५] । तत्सीसचतुर्भागेन शोधयेत्[१६] । उद्गतचूलिकमच्छं भ्राजिष्णु दधिवर्णं च शुद्धम्[१७] ।

शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः[१८] । ततः शुल्बकाकण्युत्तरापसारिता आचतुःसीमान्तादिति षोडशवर्णकाः[१९] । सुवर्णं पूर्वं निकष्य पश्चाद्वर्णिकां निकषयेत्[२०] । समरागलेखमनिम्नोन्नते देशे निकषितं परिमृदितं परिलीढं नखान्तराद्वा गैरिकेणावचूर्णितमुपधिं विद्यात्[२१] । जातिहिङ्गुलुकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति[२२] । सकेसरस्निग्धो मृदुर्भ्राजिष्णुश्च निकषरागः श्रेष्ठः[२३] । कालिङ्गकस्तापी पाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः[२४] । समरागी विक्रयक्रयहितः[२५] ।

हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः[२६] । स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः[२७] । श्वेतश्चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः[२८] । तापो बहिरन्तश्च समः किञ्जल्कवर्णः कारण्डकपुष्पवर्णो वा श्रेष्ठः[२९] । श्यावो नीलश्चाप्राप्तकः[३०] । तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः[३१] । तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च[३२] । अक्षशालामनायुक्तो नोपगच्छेत्[३३] । अभिगच्छन्नुच्छेद्यः[३४] । आयुक्तो वा सरूप्यस्वर्णस्तेनैव जीयेत[३५] । विचितवस्त्रहस्तगुह्याः काञ्चनपृषितत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुः निष्कसेयुश्च[३६] । सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन्[३७] । गृहीतं सुवर्णं धृतं च प्रयोगं करणमध्ये दद्यात्[३८] । सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात्[३९] । क्षेपणो गुणः क्षुद्रमिति कर्माणि[४०] । क्षेपणः काचार्पणादीनि[४१] । गुणः सूत्रवानादीनि[४२] । घनं सुषिरं पृषितादियुक्तं क्षुद्रकमिति[४३] । अर्पयेत्काचकर्मणः पञ्चभागं काञ्चनं दशभागं मानम्[४४] । ताम्रपादयुक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतं तस्माद्रक्षेत्[४५] । पृषितकाचकर्मणस्त्रयो हि भागाः परिभाण्डं द्वौ वास्तुकं चत्वारो वा वास्तुकं त्रयः परिभाण्डम्[४६] । त्वष्टृकर्मणः शुल्बभाण्डं समसुवर्णेन संयूहयेत्[४७] । रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेनावलेपयेत् । चतुर्भागसुवर्णं वा

वालुकाहिङ्गुलकस्य रसेन चूर्णेन वा वासयेत्[४९]। तपनीयं ज्येष्ठं सुवर्णं सरागं समसीसातिक्रान्तं पाकपत्त्रपक्वं सैन्धविकयोज्ज्वालितं नीलपीतश्वेतहरितशुककपोतवर्णानां प्रकृतिर्भवति[५०]। तीक्ष्णं चास्य मयूरग्रीवाभं श्वेतभङ्गं चिमिचिमायतितं पीतचूर्णितं काकणिकः सुवर्णरागः[५१]। तारमुपशुद्धं वास्थितुत्थे चतुः समसीसे चतुः शुष्कतुत्थे चतुः कपाले त्रिर्गोमये द्विरेवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम्[५२]। एतस्मात्काकण्युत्तरमाद्विमाषादिति सुवर्णे देयं पश्चाद्रागयोगः श्वेततारं भवति[५३]। त्रयोऽशास्तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छिताः स श्वेतलोहितकं भवति[५४]। ताम्रं पीतकं करोति[५५]। तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात्[५६]। पीतरागं भवति[५७]। श्वेततारभागौ द्वावेकस्तपनीयस्य मुद्गवर्णं करोति[५८]। कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति[५९]। प्रतिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्त्रवर्णं भवति[६०]। तस्यारम्भे रागविशेषु प्रतिवर्णिकां गृह्णीयात्[६१]। तीक्ष्णताम्रसंस्कारं च बुद्ध्येत[६२]। तस्माद्वज्रमणिमुक्ताप्रवालरूपाणामपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति[६३]।

समरागं समद्वन्द्वमसक्तपृषितं स्थिरम्।
सुविमृष्टमसंवीतं विभक्तं धारणे सुखम्[६४]॥
अभिनीतं प्रभायुक्तं संस्थानमधुरं समम्।
मनोनेत्राभिरामं च तपनीयगुणाः स्मृताः[६५]॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे अक्षशालायां सुवर्णाध्यक्षस्त्रयोदशोऽध्यायः ॥१३॥
आदितश्चतुस्त्रिंशः ॥३४॥

---

## ३२ प्रक. विशिखायां सौवर्णिकप्रचारः.

सौवर्णिकः पौरजानपदानां रूप्यसुवर्णमावेशनीभिः कारयेत्[१]। निर्दिष्टकालकार्यं च कर्म कुर्युः[२]। अनिर्दिष्टकालं कार्यापदेशं कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्च दण्डः[३]। कालाति-

पातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः[४]। यथावर्णप्रमाणं निक्षेपं
गृह्णीयुस्तथाविधमेवार्पयेयुः[५]। कालान्तरादपि च तथाविधमेव
प्रतिगृह्णीयुरन्यत्र क्षीणपरिशीर्णाभ्याम्[६]। आवेशनिभिः सुवर्ण-
पुद्गललक्षणप्रयोगेषु तत्तज्जानीयात्[७]। तप्तकलधौतकयोः काक-
णिकः सुवर्णे क्षयो देयः[८]। तीक्ष्णकाकणीरूप्यद्विगुणो रागप्रक्षे-
पस्तस्य षड्भागः क्षयः[९]। वर्णहीने माषावरे पूर्वः साहसदण्डः[१०]।
प्रमाणहीने मध्यमः तुलाप्रतिमानोपधावुत्तमः कृतभाण्डोपधौ
च[११]। सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो
दण्डः[१२]। कर्तुर्द्विगुणः सापसारश्चेत्[१३]। अनपसारः कण्टकशोधनाय
नीयेत[१४]। कर्तुश्च द्विशतो दण्डः पणच्छेदनं वा[१५]। तुलाप्रतिमान-
भाण्डं पौतवहस्तात्क्रीणीयुः[१६]। अन्यथा द्वादशपणो दण्डः[१७]। घनः
घनसुषिरं संयूह्यमवलेप्यं संघात्यं वासितकं च कारुकर्म[१८]। तुला-
विषममपसारणं विस्रावणं पेटकः पिङ्कश्चेति हरणोपायाः[१९]। संना-
मिन्युत्कीर्णिका भिन्नमस्तकोपकण्ठी कुशिक्या सकटुकक्ष्या
पारिवेल्ययस्कान्ता च दुष्टतुलाः[२०]। रूप्यस्य द्वौ भागावेकं
शुल्बस्य त्रिपुटकम्[२१]। तेनाकरोद्गतमपसार्यते तत्त्रिपुटकापसारितम्[२२]।
शुल्बेन शुल्बापसारितम्[२३]। वेल्लकेन वेल्लकापसारितम्[२४]। शुल्बार्ध-
सारेण हेम्ना हेमापसारितम्[२५]। मूकमूषा पूतिकिट्टः करटुकमुखं
नालीसंदंशो जोङ्गनी सुवर्चिकालवणम्[२६]। तदेव सुवर्णमित्यपसर-
णमार्गाः[२७]। पूर्वप्रणिहिता वा पिण्डवालुका मूषभेदादग्निष्ठादुद्धि-
यन्ते पश्चाद्बन्धनम्[२८]। आचितकपत्त्रपरीक्षायां वा रूप्यरूपेण
परिवर्तनं विस्रावणम्[२९]। पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा[३०]।
गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसंघात्येषु क्रियते[३१]। सीस-
रूपं सुवर्णपत्त्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं गाढपेटकः[३२]। स एव
पटलसंपुटेष्वभ्युद्धार्यः[३३]। पत्त्रमाश्लिष्टं यमकपत्त्रं वावलेप्येषु
क्रियते[३४]। शुल्बं तारं वा गर्भः पत्त्राणां संघात्येषु क्रियते[३५]।
शुल्बरूपसुवर्णपत्त्रसंहतं प्रमृष्टं सुपार्श्वम्[३६]। तदेव यमकपत्त्रसंहतं

प्रमृष्टं ताम्रताररूपं चोत्तरवर्णकः[37] । तदुभयं तापनिकषाभ्यां निः-शब्दोल्लेखनाभ्यां वा विद्यात्[38] । अभ्युद्धार्यं बदराम्ले लवणोदके वा साधयन्तीति पेटकः[39] । घनसुषिरे वा रूपे सुवर्णमृन्मालुका-हिङ्गुलुककल्को वा तप्तो ऽवतिष्ठते[40] । दृढवास्तुके वा रूपे वालुका-मिश्रजतुगान्धारपङ्को वा तप्तो ऽवतिष्ठते[41] । तयोस्तापनमवध्वं-सनं विशुद्धिः[42] । सपरिभाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते[43] । तस्य क्वाथनं शुद्धिः[44] । अभ्रपटलमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते तस्य विहितकाचकस्योदके नि-मज्जत एकदेशः सीदति पटलान्तरेषु वा सूच्या भिद्यते[45] । मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः[46] । तस्य तापनमवध्वंसनं वा शुद्धिरिति पिङ्कः[47] । तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां जातिरूप-वर्णप्रमाणपुद्गललक्षणान्युपलभेत[48] । कृतभाण्डपरीक्षायां पुराण-भाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः[49] । परिकुट्टनमवच्छेद-नमुल्लेखनं परिमर्दनं वा[50] । पेटकापदेशेन पृषितं गुणं पिटकां वा यत्परिशातयन्ति तत्परिकुट्टनम्[51] । यद्द्विगुणं वास्तुकानां वा रूपे सीसरूपं प्रक्षिप्याभ्यन्तरमवच्छिन्दन्ति तदवच्छेदनम्[52] । यद्घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम्[53] । हरितालमनःशिला-हिङ्गुलकचूर्णानामन्यतमेन कुरुविन्दचूर्णेन वा वस्त्रं संयूह्य यत्प-रिमृद्नन्ति तत्परिमर्दनम्[54] । तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते[55] । न चैषां किंचिदवरुग्णं भवति[56] ।

भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात्[57] । अव-लेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात्[58] । विरूपाणां वा तापनमुदकपेषणं च बहुशः कुर्यात्[59] । अवक्षेपः प्रतिमान-मग्निर्गण्डिका भण्डिकाधिकरणी पिच्छः सूत्रं चेल्लमबोल्लनं शिर उत्सङ्गो मक्षिका स्वकायेक्षादृतिरुदकशरावमग्निष्ठमिति काचं विद्यात्[60] । राजतानां विस्रं मलग्राहि परुषं प्रस्तीनं विवर्णं वा दुष्टमिति विद्यात्[61] ।

एवं नवं च जीर्णं च विरूपं च विभाण्डकं ।
परीक्षेतात्ययं चैषां यथोद्दिष्टं प्रकल्पयेत्[६२] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे विशिखायां सौवर्णिकप्रचारः चतुर्दशो ऽध्यायः ॥१४॥
आदितः पञ्चत्रिंशः ॥ ३५ ॥

३३. प्रक. कोष्ठागाराध्यक्षः ॥

कोष्ठागाराध्यक्षः सीताराष्ट्रक्रयिमपरिवर्तकप्रामित्यकापमित्यकसिंहनिकान्यजातव्ययप्रत्यायोपस्थानान्युपलभेत[१] । सीताध्यक्षोपनीतः सस्यवर्णकः सीता[२] । पिण्डकरः षड्भागः सेनाभक्तं बलिः कर उत्सङ्गः पार्श्वं पारिहीणिकमौपायनिकं कौष्ठेयकं च राष्ट्रम्[३] । धान्यमूल्यं कोशनिर्हारः प्रयोगप्रत्यादानं च क्रयिमम्[४] । सस्यवर्णानामर्घान्तरेण विनिमयः परिवर्तकः[५] । सस्ययाचनमन्यतः प्रामित्यकम्[६] । तदेव प्रतिदानार्थमापमित्यकम्[७] । कुट्टकरोचकसक्तुशुक्तपिष्टकर्म तज्जीवनेषु तैलपीडनमौरभ्रचाक्रिकेष्विक्षूणां च क्षारकर्म सिंहनिका[८] । नष्टप्रस्मृतादिरन्यजातः[९] । विक्षेपव्याधितान्तरारम्भशेषं च व्ययप्रत्यायः[१०] । तुलामानान्तरं हस्तपूरणमुत्करो व्याजी[११] । पर्युषितं प्रार्जितं चोपस्थानमिति[१२] । धान्यस्नेहक्षारलवणानां धान्यकल्पं सीताध्यक्षे वक्ष्यामः[१३] । सर्पिस्तैलवसामज्जानः स्नेहाः[१४] । फाणितगुडमत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः[१५] । सैन्धवसामुद्रबिडयवक्षारसौवर्चलोद्भेदजा लवणवर्गः[१६] । क्षौद्रं मार्द्वीकं च मधु[१७] । इक्षुरसगुडमधुफाणितजाम्बवपनसानामन्यतमो मेषशृङ्गीपिप्पलीक्वाथाभिषुतो मासिकः षाण्मासिकः सांवत्सरिको वा चिर्भिटोर्वारुकेक्षुकाण्डाम्रफलामलकावसुतः शुद्धो वा शुक्तवर्गः[१८] । वृक्षाम्लकरमर्दाम्रविदलामलकमातुलुङ्गकोलबदरसौवीरकपरूपकादिः फलाम्लवर्गः[१९] ।

दधिधान्याम्लादिः द्रवाम्लवर्गः[२०] । पिप्पलीमरीचशृङ्गिबेराजाजिकिराततिक्तगौरसर्षपकुस्तुम्बुरुचोरकदमनकमरुवकशिग्रुका-

एडादिः कटुकवर्गः[२१] । शुष्कमत्स्यमांसकन्दमूलफलशाकादि च शाकवर्गः[२२] । ततो ऽर्धमापदर्थं जानपदानां स्थापयेत्[२३] । अर्धमुपयुञ्जीत[२४] । नवेन चानवं शोधयेत्[२५] । क्षुण्णघृष्टपिष्टभृष्टानामार्द्रशुष्कसिद्धानां च धान्यानां वृद्धिक्षयप्रमाणानि प्रत्यक्षीकुर्वीत[२६] । कोद्रवव्रीहीणामर्धं सारः[२७] । शालीनामर्धं भागोनः[२८] । त्रिभागोनो वरकाणाम्[२९] । प्रियङ्गूणामर्धं सारः नवभागवृद्धिश्च[३०] । उदारकातुल्यः[३१] । यवगोधूमाश्च क्षुण्णाः[३२] । तिला यवा मुद्गमाषाश्च घृष्टाः[३३] । पञ्चभागवृद्धिर्गोधूमः सक्तवश्च[३४] । पादोना कलायचमसी[३५] । मुद्गमाषाणामर्धपादोनः[३६] । शैब्यानामर्धं सारः[३७] । त्रिभागोनः मसूराणाम्[३८] । पिष्टमामंकुल्माषाश्चाध्यर्धगुणाः[३९] । द्विगुणो यावकः[४०] । पुलाकः पिष्टं च सिद्धम्[४१] । कोद्रववरकोदारकप्रियङ्गूणां त्रिगुणमन्नम्[४२] । चतुर्गुणं व्रीहीणाम्[४३] । पञ्चगुणं शालीनाम्[४४] । तिमितमपरान्नं द्विगुणमर्धाधिकं विरूढानाम्[४५] । पञ्चभागवृद्धिः भृष्टानाम्[४६] । कलायो द्विगुणः[४७] । लाजा भरुजाश्च[४८] । षट्कं तैलमतसीनाम्[४९] । निम्बकुशाम्रकपित्थादीनां पञ्चभागः[५०] । चतुर्भागिकास्तिलकुसुम्भमधूकेङ्गुदीस्नेहाः[५१] । कार्पासक्षौमाणां पञ्चपले पलसूत्रम्[५२] । पञ्चद्रोणे शालीनां च द्वादशाढकं तण्डुलानां कलभभोजनम्[५३] । एकादशकं व्यालानाम्[५४] । दशकमौपवाह्यानाम्[५५] । नवकं सान्नाह्यानाम्[५६] । अष्टकं पत्तीनाम्[५७] । सप्तकं मुख्यानाम्[५८] । षट्कं देवीकुमाराणाम्[५९] । पञ्चकं राज्ञाम्[६०] । अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थं चतुर्भागः सूपः सूपषोडशो लवणस्यांशः चतुर्भागः सर्पिषस्तैलस्य वा एकमार्यभक्तम्[६१] । पुंसः षड्भागः सूपः[६२] । अर्धस्नेहमवराणाम्[६३] । पादोनं स्त्रीणाम्[६४] । अर्धं बालानाम्[६५] । मांसपलविंशत्या स्नेहार्धकुडुम्बः पलिको लवणस्यांशः क्षारपलयोगो द्विधरणिकः कटुकयोगो दध्नश्चार्धप्रस्थः[६६] । तेनोत्तरं व्याख्यातम्[६७] । शाकानामध्यर्धगुणः[६८] । शुष्काणां द्विगुणः स चैव योगः[६९] । हस्त्यश्वयोस्तदध्यक्षे विधाप्रमाणं वक्ष्यामः[७०] । बलीवर्दानां माष-

द्रोणं यवानां वा पुलाकः शेषमश्वविधानम्[७१] । विशेषो घाण-पिण्याकतुला कणकुण्डकं दशाढकं वा[७२] । द्विगुणं महिषोष्ट्राणाम्[७३] । अर्धद्रोणं खरपृषतरोहितानाम्[७४] । आढकमेणकुरङ्गाणाम्[७५] । अर्धाढकमजैलकवराहाणां द्विगुणं वा कणकुण्डकम्[७६] । प्रस्थौदनः शुनाम्[७७] । हंसक्रौञ्चमयूराणामर्धप्रस्थः[७८] । शेषाणामतो मृगपशुपक्षिव्यालानामेकभक्तादनुमानं ग्राहयेत्[७९] । अङ्गारांस्तुषांल्लोहकर्मान्तभित्तिलेप्यानां हारयेत्[८०] । कणिका दासकर्मकरसूपकाराणामतो ऽन्यदौदनिकापूपिकेभ्यः प्रयच्छेत्[८१] । तुलामानभाण्डं रोचनीदृषन्मुसलोलूखलकुट्टकरोचकयन्त्रपत्त्रकशूर्पचालनिकाकण्डोलीपिटकसंमार्जन्यश्चोपकरणानि[८२] । मार्जकरक्षकधरकमायकमापकदायकदापकशलाकाप्रतिग्राहकदासकर्मकरवर्गश्च विष्टिः[८३] ।

उच्चैर्धान्यस्य निक्षेपो मूताः क्षारस्य संहताः ।
मृत्काष्ठकोष्ठाः स्नेहस्य पृथिवी लवणस्य च[८४] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे कोष्ठागाराध्यक्षः पञ्चदशो ऽध्यायः ॥१५॥
आदितः षट्त्रिंशः ॥३६॥

---

३४. प्रक. पण्याध्यक्षः.

पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां सारफल्ग्वर्घान्तरं प्रियाप्रियतां च विद्यात्[१] । तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान्[२] । यच्च पण्यं प्रचुरं स्यात्तदेकीकृत्यार्घमारोपयेत्[३] । प्राप्ते ऽर्घे वार्घान्तरं कारयेत्[४] । स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत्[५] । परभूमिजानामनेकमुखम्[६] । उभयं च प्रजानामनुग्रहेण विक्रापयेत्[७] । स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत्[८] । अजस्रपण्यानां कालोपरोधं संकुलदोषं वा नोत्पादयेत्[९] । बहुमुखं वा राजपण्यं वैदेहकाः कृतार्घं विक्रीणीरन्[१०] । छेदानुरूपं च वैधरणं दद्युः[११] । षोडशभागो मानव्याजी[१२] । विंशतिभागस्तुलामानम्[१३] । गण्यपण्या-

नामेकादशभागः[१४] । परभूमिजं पण्यमनुग्रहेणावाहयेत्[१५] । नाविक-सार्थवाहेभ्यश्च परिहारमायतिक्षमं दद्यात्[१६] । अनभियोगश्चार्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः[१७] । पण्याधिष्ठातारः पण्यमूल्यमेकमुखं काष्ठद्रोण्यामेकच्छिद्रापिधानायां निदध्युः[१८] । अह्नश्चाष्टमे भागे पण्याध्यक्षस्यार्पयेयुः[१९] । इदं विक्रीतमिदं शेषमिति[२०] । तुलामानभाण्डकं चार्पयेयुः[२१] । इति स्वविषये व्याख्यातम्[२२] । परविषये तु पण्यप्रतिपण्ययोरर्घमूल्यं चागमय्य शुल्कवर्तन्यातिवाहकगुल्मतरदेयभक्तभागव्ययशुद्धमुदयं पश्येत्[२३] । असत्युदये भाण्डनिर्वहणेन पण्यप्रतिपण्यार्घेण वा लाभं पश्येत्[२४] । ततः सारपादेन स्थलव्यवहारमध्वना क्षेमेण प्रयोजयेत्[२५] । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम्[२६] । आपदि सारमात्मानं वा मोक्षयेत्[२७] । आत्मनो वा भूमिमप्राप्तः सर्वदेयविशुद्धं व्यवहरेत्[२८] । वारिपथे च यानभागकपथ्यदनपण्यप्रतिपण्यार्घप्रमाणयात्राकालभयप्रतीकारपण्यपत्तनचारित्राण्युपलभेत्[२९] ।

नदीपथे च विज्ञाय व्यवहारं चरित्रतः ।
यतो लाभस्ततो गच्छेदलाभं परिवर्जयेत्[३०] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे पण्याध्यक्षः षोडशो ऽध्यायः ॥ १६ ॥
आदितः सप्तत्रिंशः ॥ ३७ ॥

---

## ३५. प्रक. कुप्याध्यक्षः.

कुप्याध्यक्षो द्रव्यवनपालैः कुप्यमानाययेत्[१] । द्रव्यवनकर्मान्तांश्च प्रयोजयेत्[२] । द्रव्यवनच्छिदां च देयमत्ययं च स्थापयेदन्यत्रापद्भ्यः[३] । कुप्यवर्गः शाकतिनिशधन्वनार्जुनमधूकतिलकसालशिंशुपारिमेदराजादनशिरीषखदिरसरलतालसर्जाश्वकर्णसोमवल्ककशाम्रप्रियकधवादिः सारदारुवर्गः[४] । उटजचिमियचववेणुवंशसातिनकण्टकभाल्लूकादिर्वेणुवर्गः[५] । वेत्रशोकवल्लीवाशीश्यामलतानागलतादिर्वल्लीवर्गः[६] । मालतीदूर्वार्कशणगवेधुकातस्यादिर्व-

ल्कवर्गः[९]। मुञ्जबल्बजादि रज्जुभाण्डम्[१०]। तालीतालभूर्जानां पत्त्रम्[११]। किंशुककुसुम्भकुङ्कुमानां पुष्पम्[१०]। कन्दमूलफलादिरौषधवर्गः[११]। कालकूटवत्सनाभहालाहलमेषशृङ्गमुस्ताकुष्ठमहाविषवेल्लितकगौरार्द्रबालकमार्कटहैमवतकालिङ्गकदारदकांकोलसारकौष्ट्रकादीनि विषाणि[१२]। सर्पाः कीटाश्च त एव कुम्भगता विषवर्गः[१३]। गोधासेरकद्वीपिशिंशुमारसिंहव्याघ्रहस्तिमहिषचमरसृमरखड्गगोमृगगवयानां चर्मास्थिपित्तस्नाय्वस्थिदन्तशृङ्गखुरपुच्छान्यन्येषां वापि मृगपशुपक्षिव्यालानाम्[१४]। कालायसताम्रवृत्तकांस्यसीसत्रपुवैकृन्तकारकूटानि लोहानि[१५]। विदलमृत्तिकामयं भाण्डम्[१६]। अङ्गारतुषभस्मानि मृगपशुपक्षिव्यालवाटाः काष्ठतृणवाटाश्चेति[१७]।

बहिरन्तश्च कर्मान्ता विभक्ताः सर्वभाण्डिकाः।
आजीवपुररक्षार्थाः कार्याः कुप्योपजीविनाम्[१८]॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे कुप्याध्यक्षः सप्तदशो ऽध्यायः॥१७॥
आदितो ऽष्टत्रिंशः॥३८॥

---

३६ प्रक. आयुधागाराध्यक्षः.

आयुधागाराध्यक्षः सांग्रामिकं दौर्गकर्मिकं परपुराभिघातिकं चक्रयन्त्रमायुधमावरणमुपकरणं च तज्जातकारुशिल्पिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारयेत्[१]। स्वभूमिषु च स्थापयेत्[२]। स्थानपरिवर्तनमातपप्रवातप्रदानं च बहुशः कुर्यात्[३]। ऊष्मोपस्नेहक्रिमिभिरुपहन्यमानमन्यथा स्थापयेत्[४]। जातिरूपलक्षणप्रमाणागममूल्यनिक्षेपैश्चोपलभेत[५]। सर्वतोभद्रजामदग्न्यबहुमुखविश्वासघातिसङ्घाटीयानकपर्जन्यकार्धबाहूर्ध्वबाहूनि स्थिरयन्त्राणि[६]। पञ्चालिकदेवदण्डसूकरिकामुसलयष्टिहस्तिवारकतालवृन्तमुद्गरगदास्पृक्तलाकुद्दालास्फाटिमौद्घाटिमशतघ्नीत्रिशूलचक्राणि चलयन्त्राणि[७]। शक्तिप्रासकुन्तहाटकभिण्डिवालशूलतोमरवराहकर्णकणयकर्पणत्रासिकादीनि च हुलमुखानि[८]। तालचापदा-

खशार्ङ्गाणि कार्मुककोदण्डद्रूणा धनूंषि । मूर्वार्कशणगवेधुवेणु-स्नायूनि ज्याः । वेणुशरशलाकादण्डासननाराचाश्च इषवः[११] । तेषां मुखानि छेदनभेदनताडनान्यायसास्थिदारवाणि[१२] । निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः[१३] । खड्गमहिषवारणविषाणदारुवेणु-मूलानि त्सरवः[१४] । परशुकुठारपट्टसखनित्रकुद्दालक्रकचकाण्डच्छेदनाः क्षुरकल्पाः[१५] । यन्त्रगोष्पणमुष्टिपाषाणरोचनीदृषदश्च चायुधानि[१६] । लोहजालिकापट्टकवचसूत्रकं कर्कटशिंशुमारकखड्गिधेनुकहस्तिगोचर्मखुरशृङ्गसंघातं वर्माणि[१७] । शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाणपट्टनागोदरिकावेरिचर्महस्तिकर्णतालमूलधमनिकाकवाटकिटिकाप्रतिहतवलाहकान्ताश्च आवरणानि[१८] । हस्तिरथवाजिनां योग्यभाण्डमालंकारिकं संनाहकल्पनाश्चोपकरणानि[१९] । ऐन्द्रजालिकमौपनिषदिकं च कर्म कर्मान्तानां च[२०] ।

इच्छामारम्भनिष्पत्तिं प्रयोगं व्याजमुद्दयम् ।
क्षयव्ययौ च जानीयात्कुप्यानामायुधेश्वरः[२१] ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे आयुधागाराध्यक्षः अष्टादशोऽध्यायः ॥१८॥
आदित एकोनचत्वारिंशः ॥३९॥

---

३७. प्रक. तुलामानपौतवम्.

पौतवाध्यक्षः पौतवकर्मान्तान्कारयेत्[१] । धान्यमाषा दश सुवर्णमाषकः पञ्च वा गुञ्जाः[२] । ते षोडश सुवर्णः कर्षो वा[३] । चतुःकर्षं पलम्[४] । अष्टाशीतिर्गौरसर्षपा रूप्यमाषकः[५] । ते षोडश धरणम्[६] । शैम्ब्यानि वा विंशतिः[७] । विंशतितण्डुलं वज्रधरणम्[८] । अर्धमाषकः माषकः द्वौ चत्वारःअष्टौ माषकाः सुवर्णो द्वौ चत्वारः अष्टौ सुवर्णाः दश विंशतिः त्रिंशत् चत्वारिंशत् शतमिति[९] । तेन धरणानि व्याख्यातानि[१०] । प्रतिमानान्ययोमयानि मागधमेकलशैलमयानि यानि वा नोदकप्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम्[११] । षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तरा दश तुलाः कारयेल्लोहपला-

दूर्ध्वमेकपलोत्तरा यन्त्रमुभयतः शिक्यं वा[१२] । पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत्[१३] । तस्याः पञ्चपलिकं मण्डलं बद्ध्वा समकरणं कारयेत्[१४] । ततः कर्षोत्तरं पलं पलोत्तरं दशपलं द्वादश पञ्चदश विंशतिमिति पदानि कारयेत्[१५] । तत आशताद्दशोत्तरं कारयेत्[१६] । अक्षेषु नान्दीपिनद्धं कारयेत्[१७] । द्विगुणलोहां तुलामतः षण्णवत्यङ्गुलायामां परिमाणीं कारयेत्[१८] । तस्याः शतपदादूर्ध्वं विंशतिः पञ्चाशतमिति पदानि कारयेत्[१९] । विंशतितौलिको भारः[२०] । दशधरणिकं पलम्[२१] । तत्पलशतमायमानी[२२] । पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजिनी च[२३] । तासामर्धधरणावरं पलम्[२४] । द्विपलावरमुत्तरलोहम्[२५] । षडङ्गुलावराश्चायामाः[२६] । पूर्वयोः पञ्चपलिकः प्रयामो मांसलोहलवणमणिवर्जम्[२७] । काष्ठतुला अष्टहस्ता पदवती प्रतिमानवती मयूरपदाधिष्ठिता[२८] । काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम्[२९] । एष प्रदेशो बह्वल्पयोः[३०] । इति तुलाप्रतिमानं व्याख्यातम्[३१] । अथ धान्यमाषद्विपलशतं द्रोणमायमानम्[३२] । सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम्[३३] । पञ्चसप्ततिपलशतं भाजनीयम्[३४] । द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम्[३५] । तेषामाढकप्रस्थकुडुम्बाश्चतुर्भागावराः[३६] । षोडशद्रोणा खारी[३७] । विंशतिद्रोणिकः कुम्भः[३८] । कुम्भैर्दशभिर्वहः[३९] । शुष्कसारदारुमयं समं चतुर्भागशिखं मानं कारयेत्[४०] । अन्तःशिखं वा[४१] । रसस्य तु सुरायाः पुष्पफलयोस्तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः[४२] । सपादपणो द्रोणमूल्यम्[४३] । आढकस्य पादोनः[४४] । षण्माषकाः प्रस्थस्य[४५] । माषकः कुडुम्बस्य[४६] । द्विगुणं रसादीनां मानमूल्यम्[४७] । विंशतिपणाः प्रतिमानस्य[४८] । तुलामूल्यं त्रिभागः[४९] । चतुर्माषिकं प्रातिवेधनिकं कारयेत्[५०] । अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः[५१] । प्रातिवेधनिकं काकणीकमहरहः पौतवाध्यक्षाय दद्युः[५२] । द्वात्रिंशद्भागस्तप्तव्याजी सर्पिषश्चतुःषष्टिभागस्तैलस्य[५३] ।

पञ्चाशद्भागो मानस्रावो द्रवाणाम्[५४]। कुडुम्बार्धचतुरष्टभागानि मानानि कारयेत्[५५]।

कुडुम्बाश्चतुराशीतिः वारकः सर्पिषो मतः।
चतुःषष्टिस्तु तैलस्य पादश्च घटिकानयोः॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे तुलामानपौतवं एकोनविंशोऽध्यायः॥ १९॥
आदितश्चत्वारिंशः॥ ४०॥

---

३८. प्रक. देशकालमानम्.

मानाध्यक्षो देशकालमानं विद्यात्[१]। अष्टौ परमाणवो रथचक्रविप्रुट्[२]। ता अष्टौ लिक्षा[३]। ता अष्टौ यूकामध्यः[४]। ते अष्टौ यवमध्यः[५]। अष्टौ यवमध्या अङ्गुलं[६]। मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वाङ्गुलम्[७]। चतुरङ्गुलो धनुर्ग्रहः[८]। अष्टाङ्गुला धनुर्मुष्टिः[९]। द्वादशाङ्गुला वितस्तिः[१०]। छायापौरुषं च[११]। चतुर्दशाङ्गुलं शमः शलः परिरयः पदं च[१२]। द्विवितस्तिररत्निः प्राजापत्यो हस्तः[१३]। सधनुर्ग्रहः पौतवविवीतमानम्[१४]। सधनुर्मुष्टिः किष्कुः कंसो वा[१५]। द्विचत्वारिंशदङ्गुलस्तक्ष्णः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम्[१६]। चतुःपञ्चाशदङ्गुलः कुप्यवनहस्तः[१७]। चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च[१८]। चतुररत्निर्दण्डो धनुर्नालिकापौरुषं च[१९]। गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानं पौरुषं चाग्निचित्यानाम्[२०]। षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम्[२१]। दशदण्डो रज्जुः[२२]। द्विरज्जुकः परिदेशः[२३]। त्रिरज्जुकं निवर्तनम्[२४]। एकतो द्विदण्डाधिको बाहुः[२५]। द्विधनुःसहस्रं गोरुतम्[२६]। चतुर्गोरुतं योजनम्[२७]। इति देशमानं व्याख्यातम्[२८]। कालमानमत ऊर्ध्वम्[२९]। त्रुटो लवो निमेषः काष्ठा कला नालिका मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः[३०]। द्वौ त्रुटौ लवः[३१]। द्वौ लवौ निमेषः[३२]। पञ्च निमेषाः काष्ठा[३३]। त्रिंशत्काष्ठाः

कला[३४] । चत्वारिंशत्कलाः नालिका[३५] । सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः[३६] । तत्प्रमाणकुम्भच्छिद्रेण जलाढकस्य यावता कालेन स्रुतिः स कालो वा नालिका[३७] । द्विनालिका मुहूर्तः[३८] । पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मास्याश्वयुजे च मासि भवतः[३९] । ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्मासं वर्धते ह्रासते चेति[४०] । छायायामष्टपौरुष्यामष्टादशभागश्छेदः[४१] । षट्पौरुष्यां चतुर्दशभागः[४२] । चतुष्पौरुष्यामष्टभागः[४३] । द्विपौरुष्यां षड्भागः[४४] । पौरुष्यां चतुर्भागः[४५] । अष्टाङ्गुलायां त्रयोदशभागाः[४६] । चतुरङ्गुलायां त्रयोऽष्टभागः[४७] । अच्छायो मध्याह्न इति[४८] । परावृत्ते दिवसे शेषमेवं विद्यात्[४९] । आषाढे मासि नष्टच्छायो मध्याह्नो भवति[५०] । अतः परं श्रावणादीनां षण्मासानां द्व्यङ्गुलोत्तरा माघादीनां द्व्यङ्गुलावरा छाया इति[५१] । पञ्चदशाहोरात्राः पक्षः[५२] । सोमाप्यायनः शुक्लः[५३] । सोमावच्छेदनो बहुलः[५४] । द्विपक्षो मासः[५५] । त्रिंशदहोरात्रः प्रकर्ममासः[५६] । सार्धः सौरः[५७] । अर्धन्यूनश्चान्द्रमासः[५८] । सप्तविंशतिर्नक्षत्रमासः[५९] । द्वात्रिंशत् मलमासः[६०] । पञ्चत्रिंशदश्ववाहायाः[६१] । चत्वारिंशद्धस्तिवाहायाः[६२] । द्वौ मासावृतुः[६३] । श्रावणः प्रोष्ठपदश्च वर्षाः[६४] । आश्वयुजः कार्तिकश्च शरत्[६५] । मार्गशीर्षः पौषश्च हेमन्तः[६६] । माघः फाल्गुनश्च शिशिरः[६७] । चैत्रो वैशाखश्च वसन्तः[६८] । ज्येष्ठामूलीय आषाढश्च ग्रीष्मः[६९] । शिशिराद्युत्तरायणम्[७०] । वर्षादि दक्षिणायनम्[७१] । द्व्ययनः संवत्सरः[७२] । पञ्चसंवत्सरो युगमिति[७३] ।

दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः[७४] ॥
एवमर्धतृतीयानामब्दानामधिमासकम् ।
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम्[७५] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे देशकालमानं विंशो ऽध्यायः ॥२०॥
आदित एकचत्वारिंशः ॥४१॥

## २१ प्रक. शुल्काध्यक्षः.

शुल्काध्यक्षः शुल्कशालाध्वजं च प्राङ्मुखमुदङ्मुखं वा महाद्वाराभ्याशे निवेशयेत्[1] । शुल्कादायिनश्चत्वारः पञ्च वा सार्थोपयातान्वणिजो लिखेयुः[2] । के कुतस्त्याः कियत्पण्याः क्व चाभिज्ञानमुद्रा वा कृता इति[3] । अमुद्राणामत्ययो देयद्विगुणः[4] । कूटमुद्राणां शुल्काष्टगुणो दण्डः[5] । भिन्नमुद्राणामत्ययो घटिकास्थाने स्थानम्[6] । राजमुद्रापरिवर्तने नामकृते वा सपादपणिकं वहनं दापयेत्[7] । ध्वजमूलोपस्थितस्य प्रमाणमर्घं च वैदेहकाः पण्यस्य ब्रूयुः[8] । एतत्प्रमाणेनार्घेण पण्यमिदं कः क्रेतेति[9] । त्रिरुद्घोषितमर्थिभ्यो दद्यात्[10] । क्रेतृसंघर्षे मूल्यवृद्धिः सशुल्का कोशं गच्छेत्[11] । शुल्कभयात्पण्यप्रमाणं मूल्यं वा हीनं ब्रुवतस्तदतिरिक्तं राजा हरेत्[12] । शुल्कमष्टगुणं वा दद्यात्[13] । तदेव निविष्टपण्यस्य भाण्डस्य हीनप्रतिवर्णकेनार्घापकर्षेण सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च कुर्यात्[14] । प्रतिक्रेतृभयाद्वा पण्यमूल्यादुपरि मूल्यं वर्धयतो मूल्यवृद्धिं राजा हरेत्[15] । द्विगुणं वा शुल्कं कुर्यात्[16] । तदेवाष्टगुणमध्यक्षस्य छादयतः[17] । तस्माद्विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः[18] । तर्कः फल्गुभाण्डानामानुग्राहिकाणां च[19] । ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः[20] । पथिकोत्पथिकास्तद्विद्युः[21] । वैवाहिकमन्वायनमापयानिकं यज्ञकृत्यप्रसवनैमित्तिकं देवेज्याचौलोपनयनगोदानव्रतदक्षिणादिषु क्रियाविशेषेषु भाण्डमुच्छुल्कं गच्छेत्[22] । अन्यथावादिनः स्तेयदण्डः[23] । कृतशुल्केनाकृतशुल्कं निर्वाहयतो द्वितीयमेकमुद्रया भित्त्वा पण्यपुटमपहरतो वैदेहकस्य तच्च तावच्च दण्डः[24] । शुल्कस्थानाद्गोमयपलालं प्रमाणं कृत्वापहरत उत्तमः साहसदण्डः[25] । शस्त्रवर्मकवचलोहरथरत्नधान्यपशूनामन्यतमानिर्वाह्यं निर्वाहयतो यथावघुषितो दण्डः पण्यनाशश्च[26] । तेषामन्यतमस्यानयने बहिरेवोच्छुल्को विक्रयः[27] । अन्तपालः सपादपणिकां वर्तनीं गृह्णीयात्पण्यवहनस्य[28] ।

पणिकामेकखुरस्य पशूनामर्धपणिकां क्षुद्रपशूनां पादिकामंसभारस्य माषिकाम्[२९]। नष्टापहृतं च प्रतिविदध्यात्[३०]। वैदेश्यं सार्थं कृतसारफल्गुभाण्डविचयनमभिज्ञानं मुद्रां च दत्त्वा प्रेषयेदध्यक्षस्य[३१]। वैदेहकव्यञ्जनो वा सार्थप्रमाणं राज्ञः प्रेषयेत्[३२]। तेन प्रदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणमुपदिशेत्सर्वज्ञत्वख्यापनार्थम्[३३]। ततः सार्थमध्यक्षो ऽभिगम्य ब्रूयात्[३४]। इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यम्[३५]। एष राज्ञः प्रभाव इति[३६]। निगूहितफल्गुभाण्डं शुल्काष्टगुणो दण्डः[३७]। सारभाण्डं सर्वापहारः[३८]।

राष्ट्रपीडाकरं भाण्डमुच्छिन्द्यादफलं च यत्।
महोपकारमुच्छुल्कं कुर्याद्बीजं तु दुर्लभम्[३९]॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे शुल्काध्यक्ष एकविंशो ऽध्यायः॥ २१॥
आदितो द्विचत्वारिंशः॥ ४२॥

---

शुल्कव्यवहारो बाह्यमाभ्यन्तरं चातिथ्यम्[१]। निष्क्राम्यं प्रवेश्यं च शुल्कम्[२]। प्रवेश्यानां मूल्यपञ्चभागः[३]। पुष्पफलशाकमूलकन्दवाल्लिक्यबीजशुष्कमत्स्यमांसानां षड्भागं गृह्णीयात्[४]। शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत्कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः[५]। क्षौमदुकूलक्रिमितानकङ्कटहरितालमनःशिलाहिङ्गुलुकलोहवर्णधातूनां चन्दनागरुकटुककिण्वावरणानां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानामजैलकस्य च दशभागः पञ्चदशभागो वा[६]। वस्त्रचतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्ममृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः पञ्चविंशतिभागो वा[७]। द्वारादेयं शुल्कपञ्चभागमानुग्राहिकं वा यथादेशोपकारं स्थापयेत्[८]। जातिभूमिषु च पण्यानामविक्रयः[९]। खनिभ्यो धातुपण्यादानेषु षट्छतमत्ययः[१०]। पुष्पफलवाटेभ्यः

पुष्पफलादाने चतुष्पञ्चाशत्पणो दण्डः[11] । षण्डेभ्यः शाकमूलकन्दादाने पादोनं द्विपञ्चाशत्पणो दण्डः[12] । क्षेत्रेभ्यः सर्वसस्यादाने त्रिपञ्चाशत्पणः[13] । पणो ऽध्यर्धपणश्च सीतात्ययः[14] ।

अतो नवपुराणानां देशजातिचरित्रतः ।
पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः[15] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे शुल्कव्यवहारो द्वाविंशो ऽध्यायः ॥ २२ ॥
आदितस्त्रिचत्वारिंशः ॥ ४३ ॥

---

## ४०. प्रक. सूत्राध्यक्षः ॥

सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं तज्जातपुरुषैः कारयेत्[1] । ऊर्णावल्ककार्पासतूलशणक्षौमाणि च[2] । विधवान्यङ्गाकन्याप्रव्रजितादण्डप्रतिकारिणीभी रूपाजीवामातृकाभिर्वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत्[3] । श्लक्ष्णस्थूलमध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत्[4] । बह्वल्पतां च सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात्[5] । तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः[6] । सूत्रह्रासे वेतनह्रासः द्रव्यसारात्[7] । कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारुभिश्च कर्म कारयेत्प्रतिसंसर्गं च गच्छेत्[8] । क्षौमदुकूलक्रिमितानराङ्कवकार्पाससूत्रवानकर्मान्तांश्च प्रयुञ्जानो गन्धमाल्यदानैरन्यैश्चौपग्राहिकैराराधयेत्[9] । वस्त्रास्तरणप्रावरणविकल्पानुत्थापयेत्[10] । कङ्कटकर्मान्तांश्च तज्जातकारुशिल्पिभिः कारयेत्[11] । याश्चानिष्कासिन्यः प्रोषितविधवान्यङ्गा कन्यका वात्मानं बिभृयुस्ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः[12] । स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत्[13] । सूत्रपरीक्षार्थमात्रः प्रदीपः[14] । स्त्रिया मुखसंदर्शने ऽन्यकार्यसंभाषायां वा पूर्वः साहसदण्डः[15] । वेतनकालातिपातने मध्यमः[16] । अकृतकर्मवेतनप्रदाने च[17] । गृहीत्वा वेतनं कर्माकुर्वन्त्याः अङ्गुष्ठसंदंशं दापयेत्[18] । भक्षितापहृतावस्कन्दि-

तानां च[१९]। वेतनेषु च कर्मकराणामपराधतो दण्डः[२०]। रज्जूवर्तकैश्च वर्मकारैश्च स्वयं संसृज्येते[२१]। भाण्डादीनि च वरत्रादीनि वर्तयेत्[२२]।

सूत्रवल्कमयी रज्जूः वरत्रा वेत्रवैणवीः।
सांनाह्या बन्धनीयाश्च यानयुग्यस्य कारयेत्[२३]॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे सूत्राध्यक्षस्त्रयोविंशो ऽध्यायः ॥२३॥
आदितश्चतुश्चत्वारिंशः ॥४४॥

---

## ४१ प्रक. सीताऽध्यक्षः.

सीताध्यक्षः कृषितन्त्रगुल्मवृक्षायुर्वेदज्ञस्तज्ज्ञसखो वा सर्वधान्यपुष्पफलशाककन्दमूलवाल्लिक्यक्षौमकार्पासबीजानि यथाकालं गृह्णीयात्[१]। बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत्[२]। कर्षणयन्त्रोपकरणबलीवर्दैश्चैषामसङ्गं कारयेत्[३]। कारुभिश्च कर्मारकुट्टाकमेदकरज्जुवर्तकसर्पग्राहादिभिश्च[४]। तेषां कर्मफलविनिपाते तत्फलहानं दण्डः[५]। षोडशद्रोणं जाङ्गलानां वर्षप्रमाणमध्यर्धमानूपानां देशवापानामर्धत्रयोदशाश्मकानां त्रयोविंशतिरवन्तीनाममितमपरान्तानां हैमन्यानां च कुल्यावापानां च कालतः[६]। वर्षात्रिभागः पूर्वपश्चिममासयोर्द्वौ त्रिभागौ मध्यमयोः सुषमारूपम्[७]। तस्योपलब्धिर्बृहस्पतेः स्थानगमनगर्भाधानेभ्यः शुक्रोदयास्तमयचारेभ्यः सूर्यस्य प्रकृतिवैकृताच्च[८]। सूर्याद्बीजसिद्धिः[९]। बृहस्पतेः सस्यानां स्तम्बकारिता[१०]। शुक्राद्वृष्टिरिति[११]।

त्रयः सप्ताहिका मेघा अशीतिः कणशीकराः।
षष्टिरातपमेघानामेषा वृष्टिः समाहिता[१२]॥
वातमातपयोगं च विभजन्यत्र वर्षति।
त्रीन्करीषांश्च जनयंस्तत्र सस्यागमो ध्रुवः[१३]॥

ततः प्रभूतोदकमल्पोदकं वा सस्यं वापयेत्[१४]। शालिव्रीहिकोद्रवतिलप्रियङ्गूदारकवराकाः पूर्ववापाः[१५]। मुद्गमाषशैम्ब्याय

मध्यवापाः[16] । कुसुम्भमसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः पश्चाद्वापाः[17] । यथर्तुवशेन वा बीजवापाः[18] । वापातिरिक्तमर्धसीतिकाः कुर्युः[19] । स्ववीर्योपजीविनो वा चतुर्थपञ्चभागिका यथेष्टमनवसितं भागं दद्युरन्यत्र कृच्छ्रेभ्यः स्वसेतुभ्यः[20] । हस्तप्रावर्तिममुदकभागं पञ्चमं दद्युः[21] । स्कन्धप्रावर्तिमं चतुर्थम्[22] । स्रोतोयन्त्रप्रावर्तिमं च तृतीयम्[23] । चतुर्थं नदीसरस्तटाककूपोद्घाटम्[24] । कर्मोदकप्रमाणेन केदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत्[25] । शाल्यादि ज्येष्ठम्[26] । षण्डो मध्यमः[27] । इक्षुः प्रत्यवरः[28] । इक्षवो हि बह्वाबाधा व्ययग्राहिणश्च[29] । फेनाघातो वल्लीफलानां परिवाहान्ताः पिप्पलीमृद्वीकेक्षूणां कूपपर्यन्ताः शाकमूलानां हरणीपर्यन्ताः हरितकानां पाल्योलपानां गन्धभैषज्योशीरहीरबेरपिण्डालुकादीनाम्[30] । यथास्वं भूमिषु च स्थाल्याश्चानूप्याश्चौषधीः स्थापयेत्[31] । तुषारपायनमुष्णशोषणं चासप्तरात्रादिति धान्यबीजानां त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानां मधुघृतसूकरवसाभिः शकृद्युक्ताभिः कांडबीजानां छेदलेपो मधुघृतेन कन्दानाम्, अस्थिबीजानां शकृदालेपः, शाखिनां गर्तदाहो गोऽस्थिशकृद्भिः काले दौहृदं च[32] । प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत्[33] ।

कार्पाससारं निर्मोकं सर्पस्य च समाहरेत् ।
न सर्पास्तत्र तिष्ठन्ति धूमो यत्रैष तिष्ठति ॥

सर्वबीजानां तु प्रथमवापे सुवर्णोदकसंप्लुतां पूर्वमुष्टिं वापयेदमुं च मन्त्रं ब्रूयात्[35] ।

प्रजापतये काश्यपाय देवाय च नमः सदा ।
सीता मे ऋध्यतां देवी बीजेषु च धनेषु च[36] ॥

षण्डवाटगोपालकदासकर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात्[37] । सपादपणिकं मासं दद्यात्[38] । कर्मानुरूपं कारुभ्यो भक्तवेतनम्[39] । प्रशीर्णं च पुष्पफलं देवकार्यार्थं व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाहरेयुः । राशीमूलमुञ्छवृत्तयः[40] ।

यथाकालं च सस्यादि जातं जातं प्रवेशयेत् ।
न क्षेत्रे स्थापयेत्किंचित्पलालमपि पण्डितैः[४२] ॥
प्रकाराणां समुच्छ्रायान्वलभीर्वा तथाविधाः ।
न संहतानि कुर्वीत न तुच्छानि शिरांसि च[४३] ॥
खलस्य प्रकरान्कुर्यान्मण्डलान्ते समाश्रितान् ।
अनग्निकाः सोदकाश्च खले स्युः परिकर्मिणः[४४] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे सीताध्यक्षः चतुर्विंशो ऽध्यायः ॥२४॥
आदितः पञ्चचत्वारिंशः ॥४५॥

४२. प्रक. सुराध्यक्षः.

सुराध्यक्षः सुराकिण्वव्यवहारान्दुर्गे जनपदे स्कन्धावारे वा तज्जातसुराकिण्वव्यवहारिभिः कारयेत्[1] । एकमुखमनेकमुखं वा विक्रयक्रयवशेन वा षट्छतमत्ययमन्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्[2] । ग्रामादनिर्णयनमसंपातं च[3] । सुरायाः प्रमादभयात्कर्मसु निर्दिष्टानां मर्यादातिक्रमभयादार्याणामुत्साहभयाच्च तीक्ष्णानां लाञ्छितमल्पं वा चतुर्भागमर्धकुडुम्बं कुडुम्बमर्धप्रस्थं प्रस्थं वेति ज्ञातशौचा निर्हरेयुः[4] । पानागारेषु वा पिबेयुरसंचारिणः[5] । निक्षेपोपनिधिप्रयोगापहृतादीनामनिष्टोपगतानां च द्रव्याणां ज्ञानार्थमस्वामिकं कुप्यं हिरण्यं चोपलभ्य निक्षेप्तारमन्यत्र व्यपदेशेन ग्राहयेत्[6] । अतिव्ययकर्तारमनायतिव्ययं च[7] । न चानर्घेण कालिकां वा सुरां दद्यादन्यत्र दुष्टसुरायाः[8] । तामन्यत्र विक्रापयेत्[9] । दासकर्मकरेभ्यो वा वेतनं दद्यात्[10] । वाहनप्रतिपानं सूकरपोषणं वा दद्यात्[11] । पानागाराण्यनेककक्ष्याणि विभक्तशयनासनवन्ति पानोद्देशानि गन्धमाल्योदकवन्त्यृतुसुखानि कारयेत्[12] । तत्रस्थाः प्रकृत्यौत्पत्तिकौ व्ययौ गूढा विद्युरागन्तूंश्च[13] । क्रेतॄणां मत्तसुप्तानामलंकाराच्छादनहिरण्यानि च विद्युः[14] । तन्नाशे वणिजस्तच्च तावच्च दण्डं दद्युः[15] । वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः

पेशलरूपाभिरागन्तूनां वास्तव्यानां चार्यरूपाणां मत्तसुप्तानां भावं विद्युः[१६]। मेदकप्रसन्नासवारिष्टमैरेयमधूनामुदकद्रोणं तण्डुलानामर्धाढकं त्रयः प्रस्थाः किण्वस्येति मेदकयोगः[१७]। द्वादशाढकं पिष्टस्य पञ्च प्रस्थाः किण्वस्य पुत्रकत्वक्फलयुक्तो वा जातिसंभारः प्रसन्नायोगः[१८]। कपित्थतुला फाणितं पञ्चतौलिकं प्रस्थो मधुन इत्यासवयोगः[१९]। पादाधिको ज्येष्ठः पादहीनः कनिष्ठः[२०]। चिकित्सकप्रमाणाः प्रत्येकशो विकाराणामरिष्टाः[२१]। मेषशृङ्गित्वक्काथाभिषुतो गुडप्रतीवापः पिप्पलीमरिचसंभारस्त्रिफलायुक्तो वा मैरेयः[२२]। गुडयुक्तानां वा सर्वेषां त्रिफलासंभारः[२३]। मृद्वीकारसो मधु[२४]। तस्य स्वदेशो व्याख्यानं कापिशायनं हारहूरकमिति[२५]। माषकलनीद्रोणमामं सिद्धं वा त्रिभागाधिकतण्डुलं मोरटादीनां कार्षिकभागयुक्तः किण्वबन्धः[२६]। पाठालोध्रतेजोवत्येलावालुकमधुमधुरसाप्रियङ्गुदारुहरिद्रामरिचपिप्पलीनां च पञ्चकार्षिकः संभारयोगो मेदकस्य[२७]। प्रसन्नायाश्च मधुकनिर्यूहयुक्ता कटशर्करा वर्णप्रसादिनी च[२८]। चोचचित्रकविलङ्गगजपिप्पलीनां च कार्षिकः क्रमुकमधुकमुस्तालोध्राणां द्विकार्षिकश्चासवसंभारः[२९]। दशभागश्चैषां बंजबन्धः[३०] प्रसन्नायोगः श्वेतसुरायाः[३१]। सहकारसुरा रसोत्तरा बीजोत्तरा वा महासुरा संभारिकी वा[३२]। तासां मोरटापलाशवत्तरमेषशृङ्गीकरञ्जक्षीरवृक्षकषायभावितं दग्धकटशर्कराचूर्णं लोध्रचित्रकविलङ्गपाठामुस्ताकलिङ्गयवदारुहरिद्रेन्दीवरशतपुष्पापामार्गसप्तपर्णनिम्बास्फोतकल्कार्धयुक्तमन्तर्नखो मुष्टिः कुम्भीं राजपेयां प्रसादयति[३२]। फाणितः पञ्चपलिकश्चात्र रसवृद्धिर्देयः[३३]। कुटुम्बिनः कृत्येषु श्वेतसुरामौषधार्थं वारिष्टमन्यद्वा कर्तुं लभेरन्[३४]। उत्सवसमाजयात्रासु चतुरहःसौरिको देयः[३५]। तेष्वननुज्ञातानां प्रहवणान्तं दैवसिकमत्ययं गृह्णीयात्[३६]। सुराकिण्वविचयं स्त्रियो बालाश्च कुर्युः[३७]। अराजपण्याः शतं शुल्कं दद्युः[३८]। सुरकामेदकारिष्टमधुफलाम्लाम्लशीधूनां च[३९]।

अक्षश्च विक्रयं व्याजीं ज्ञात्वा मानहिरण्ययोः ।
तथा वैधरणं कुर्यादुचितं चानुवर्तयेत्[40] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे सुराध्यक्षः पञ्चविंशो ऽध्यायः ॥ २५ ॥
आदितः षट्चत्वारिंशः ॥ ४६ ॥

---

### ४३. प्रक. सूनाध्यक्षः ॥

सूनाध्यक्षः प्रदिष्टाभयानामभयवनवासिनां च मृगपशुपक्षिमत्स्यानां बन्धवधहिंसायामुत्तमं दण्डं कारयेत्[1] । कुटुम्बिनामभयवनपरिग्रहेषु मध्यमम्[2] । अप्रवृत्तवधानां मत्स्यपक्षिणां बन्धवधहिंसायां पादोनसप्तविंशतिपणमत्ययं कुर्यात्[3] । मृगपशूनां द्विगुणम्[4] । प्रवृत्तहिंसानामपरिगृहीतानां षड्भागं गृह्णीयात्[5] । मत्स्यपक्षिणां दशभागं वाधिकं मृगपशूनां शुल्कं वाधिकम्[6] । पक्षिमृगाणां जीवत्षड्भागमभयवनेषु प्रमुञ्चेत्[7] । सामुद्रहस्त्यश्वपुरुषवृषगर्दभाकृतयो मत्स्याः सारसा नादेयास्तटाककुल्योद्भवा वा क्रौञ्चोत्क्रोशकदात्यूहहंसचक्रवाकजीवञ्जीवकभृङ्गराजचकोरमत्तकोकिलमयूरशुकमदनशारिका विहारपक्षिणो मङ्गल्याश्चान्येऽपि प्राणिनः पक्षिमृगा हिंसाबाधेभ्यो रक्ष्याः । रक्षातिक्रमे पूर्वः साहसदण्डः[9] । मृगपशूनामनस्थिमांसं सद्योहतं विक्रीणीरन्[10] । अस्थिमतः प्रतिपातं दद्युः[11] । तुलाहीने हीनाष्टगुणम्[12] । वत्सो वृषो धेनुश्चैषामवध्याः[13] । घातः पञ्चाशत्को दण्डः[14] । क्लिष्टघातं घातयतश्च[15] । परिसूनमशिरःपादास्थि विगन्धं स्वयंमृतं च न विक्रीणीरन्[16] । अन्यथा द्वादशपणो दण्डः[17] ।

दुष्टाः पशुमृगव्याला मत्स्याश्चाभयचारिणः ।
अन्यत्र गुप्तस्थानेभ्यो वधबन्धमवाप्नुयुः[18] ॥

इत्यध्यक्षप्रचारे द्वितीये ऽधिकरणे सूनाध्यक्षः षड्विंशो ऽध्यायः ॥ २६ ॥
आदितः सप्तचत्वारिंशः ॥ ४७ ॥

## ४४. प्रक. गणिकाध्यक्षः.

गणिकाध्यक्षो गणिकान्वयामगणिकान्वयां वा रूपयौवनशिल्पसंपन्नां सहस्रेण गणिकां कारयेत्[1] । कुटुम्बार्धेन प्रतिगणिकाम्[2] । निष्पतिताप्रेतयोर्दुहिता भगिनी वा कुटुम्बं भरेत्[3] । तन्माता वा प्रतिगणिकां स्थापयेत्[4] । तासामभावे राजा हरेत्[5] । सौभाग्यालंकारवृद्ध्या सहस्रेण वारं कनिष्ठं मध्यमुत्तमं वारोपयेत्[6] । छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थम्[7] । सौभाग्यभङ्गे मातृकां कुर्यात्[8] । निष्क्रयश्चतुर्विंशतिसाहस्रो गणिकायाः[9] । द्वादशसाहस्रो गणिकापुत्रस्य[10] । अष्टवर्षात्प्रभृति राज्ञः कुशीलवकर्म कुर्यात्[11] । गणिका दासी भग्नभोगा कोष्ठागारे महानसे वा कर्म कुर्यात्[12] । अविशन्ती सपादपणमवरुद्धा मासवेतनं दद्यात्[13] । भोगं दायमायव्ययमायतिं च गणिकायाः निबन्धयेत्[14] । अतिव्ययकर्म च वारयेत्[15] । मातृहस्तादन्यत्राभरणन्यासे सपादचतुष्पणो दण्डः[16] । स्वापतेयं विक्रयमाधानं वा नयन्त्याः सपादपञ्चाशत्पणो दण्डः[17] । चतुर्विंशतिपणो वाक्पारुष्ये[18] । द्विगुणो दण्डपारुष्ये[19] । सपादपञ्चाशत्पणः पणोऽर्धपणश्च कर्णच्छेदने[20] । अकामायाः कुमार्या वा साहसे उत्तमो दण्डः[21] । सकामायाः पूर्वः साहसदण्डः[22] । गणिकामकामां रुन्धतो निष्पातयतो वा व्रणविदारणेन वा रूपमुपघ्नतः सहस्रं दण्डः[23] । स्थानविशेषेण वा दण्डवृद्धिरानिष्क्रयद्विगुणात्पणसहस्रं वा दण्डः[24] । प्राप्ताधिकारां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः[25] । मातृकादुहितृकारूपदासीनां घात उत्तमः साहसदण्डः[26] । सर्वत्र प्रथमेऽपराधे प्रथमः[27] । द्वितीये द्विगुणः[28] । तृतीये त्रिगुणः[29] । चतुर्थे यथाकामी स्यात्[30] । राजाज्ञया पुरुषमनभिगच्छन्ती गणिका शिफासहस्रं लभेत[31] । पञ्चसहस्रं वा दण्डः[32] । भोगं गृहीत्वा द्विषत्या भोगद्विगुणो दण्डः[33] । वसति भोगापहारे भोगमष्टगुणं दद्यादन्यत्र व्याधिपुरुषदोषेभ्यः[34] । पुरुषं घ्नत्याश्चिताप्रतापोऽप्सु प्रवेशनं

रश्च[50]। कोशो धर्मकामहेतुः[51]। देशकालकार्यवशेन तु कोशदण्डयोरन्यतरः प्रमाणीभवति[52] । लब्धपालनो हि दण्डः कोशस्य[53]। कोशः कोशस्य दण्डस्य च भवति[54]। सर्वद्रव्यप्रयोजकत्वात्कोशव्यसनं गरीय इति[55] । दण्डमित्रव्यसनयोर्मित्रव्यसनमिति वातव्याधिः[56] । मित्रमभृतं व्यवहितं च कर्म करोति[57] । पार्ष्णिग्राहमासारममित्रमाटविकं च प्रतिकरोति[58] । कोशदण्डभूमिश्चोपकरोति व्यसनावस्थायोगमिति[59] । नेति कौटिल्यः[60]। दण्डवतो मित्रं मित्रभावे तिष्ठत्यमित्रो वा मित्रभावे[61] । दण्डमित्रयोस्तु साधारणे कार्ये सारतः स्वयुद्धदेशकाललाभाद्विशेषः[62] । शीघ्राभियाने त्वमित्राटविकाभ्यन्तरकोपे च न मित्रं विद्यते[63] । व्यसनयौगपद्ये परवृद्धौ च मित्रमर्थयुक्तौ तिष्ठति[64] । प्रकृतिव्यसनसंप्रधारणमुक्तमिति[65] ।

प्रकृत्यवयवानां तु व्यसनस्य विशेषतः ।
बहुभावोऽनुरागो वा सारो वा कार्यसाधकः[66] ॥
द्वयोस्तु व्यसने तुल्ये विशेषो गुणतः क्षयात् ।
शेषप्रकृतिसाद्गुण्यं यदि स्यान्नाभिधेयकम्[67] ॥
शेषप्रकृतिनाशस्तु यत्रैकव्यसनाद्भवेत् ।
व्यसनं तद्गरीयः स्यात्प्रधानस्येतरस्य वा[68] ॥

इति व्यसनाधिकारिके ऽष्टमे ऽधिकरणे प्रकृतिव्यसनवर्गः प्रथमो ऽध्यायः ॥ १ ॥ आदितः सप्तदशशतः ॥ ११७ ॥

## १२८ प्रक. राजराज्ययोर्व्यसनचिन्ता.

राजा राज्यमिति प्रकृतिसंक्षेपः[1] । राज्ञो ऽभ्यन्तरो बाह्यो वा कोप इति[2] । अहिभयादभ्यन्तरः कोपो बाह्यकोपात्पापीयान्[3]। अन्तरमात्यकोपश्चान्तःकोपात्[4] । तस्मात्कोशदण्डशक्तिमात्मसंस्थां कुर्वीत[5] । द्वैराज्यवैराज्ययोर्द्वैराज्यमन्योन्यपक्षद्वेषानुरागाभ्यां

परस्परसंघर्षेण वा विनश्यति[६]। वैराज्यं तु प्रकृतिचित्तग्रहणापेक्षि यथास्थितमन्यैर्भुज्यत इत्याचार्याः[७]। नेति कौटिल्यः[८]। पितापुत्रयोर्भ्रात्रोर्वा द्वैराज्यं तुल्ययोगक्षेमममत्यावग्रहं वर्तयतेति[९]। वैराज्यं तु जीवतः परस्याच्छिद्य नैतन्ममेति मन्यमानः कर्शयत्यपवाहयति[१०]। पण्यं वा करोति[११]। विरक्तं वा परित्यज्यापगच्छतीति[१२]। अन्धश्चलितशास्त्रो वा राजेति[१३]। अशास्त्रचक्षुरन्धो यत्किंचनकारी दृढाभिनिवेशी परप्रणेयो वा राज्यमन्यायेनोपहन्ति[१४]। चलितशास्त्रस्तु यत्र शास्त्राच्चलितमतिर्भवति शक्यानुनयो भवतीत्याचार्याः[१५]। नेति कौटिल्यः[१६]। अन्धो राजा शक्यते सहायसंपदा यत्र तत्र वा पर्यवस्थापयितुमिति[१७]। चलितशास्त्रस्तु शास्त्रादन्यथाभिनिविष्टबुद्धिरन्यायेन राज्यमात्मानं चोपहन्तीति[१८]। व्याधितो नवो वा राजेति[१९]। व्याधितो राजा राज्योपघातममात्यमूलं प्राणाबाधं वा राज्यमूलमवाप्नोति[२०]। नवस्तु राजा स्वधर्मानुग्रहपरिहारदानमानकर्मभिः प्रकृतिरञ्जनोपकारैश्चरतीत्याचार्याः[२१]। नेति कौटिल्यः[२२]। व्याधितो राजा यथाप्रवृत्तं राजप्रणिधिमनुवर्तयति[२३]। नवस्तु राजा बलावर्जितं ममेदं राज्यमिति यथेष्टमनवग्रहश्चरति[२४]। सामुत्थायिकैरवगृहीतो वा राज्योपघातं मर्षयति[२५]। प्रकृतिष्वरूढः सुखमुच्छेत्तुं भवति[२६]। व्याधिते विशेषः[२७]। पापरोग्यपरोगी च[२८]। नवे ऽप्यभिजातो ऽनभिजात इति[२९]। दुर्बलो ऽभिजातो बलवाननभिजातो राजेति[३०]। दुर्बलस्याभिजातस्योपजापं दौर्बल्यापेक्षाः प्रकृतयः कृच्छ्रेणोपगच्छन्ति[३१]। बलवतश्चानभिजातस्य बलापेक्षाः सुखेनेत्याचार्याः[३२]। नेति कौटिल्यः[३३]। दुर्बलमभिजातं प्रकृतयः स्वयमुपनमन्ति[३४]। जात्यमैश्वर्यप्रकृतिरनुवर्तत इति[३५]। बलवतश्चानभिजातस्योपजापं विसंवादयन्ति[३६]। अनुयोगे साद्गुण्यमिति[३७]। प्रयासवधात्सस्यवधो मुष्टिवधात्पापीयान्निराजीवत्वादवृष्टिरतिवृष्टित इति[३८]।

द्वयोर्द्वयोर्व्यसनयोः प्रकृतीनां बलाबलम् ।
पारम्पर्यक्रमेणोक्तं याने स्थाने च कारणम्[२०] ॥

इति व्यसनाधिकारिके ऽष्टमे ऽधिकरणे राजराज्ययोर्व्यसनचिन्ता द्वितीयो ऽध्यायः ॥ २ ॥ आदितो ऽष्टादशशतः ॥ १२८ ॥

—→•←—

## १२६ प्रक. पुरुषव्यसनवर्गः.

अविद्याविनयः पुरुषव्यसनहेतुः[१] । अविनीतो हि व्यसनदोषान्न पश्यति[२] । तानुपदेक्ष्यामः[३] । कोपजास्त्रिवर्गः[४] । कामजश्चतुर्वर्गः[५] । तयोः कोपो गरीयान्[६] । सर्वत्र हि कोपश्चरति[७] । प्रायशश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते[८] । कामवशाः क्षयव्यसननिमित्तमतिव्याधिभिरिति[९] । नेति भारद्वाजः[१०] । सत्पुरुषाचारः कोपो वैरायतनमवज्ञातवधो भीतमनुष्यता च[११] । नित्यश्च कोपेन संबन्धः पापप्रतिषेधार्थः कामः सिद्धिलाभः सान्त्वं त्यागशीलता संप्रियभावश्च[१२] । नित्यश्च कामेन संबन्धः कृतकर्मणः फलोपभोगार्थ इति[१३] । नेति कौटिल्यः[१४] । द्वेष्यता शत्रुवेदनमनर्थस्य संयोगो दुःखासङ्गश्च कोपः[१५] । परिभवो द्रव्यनाशः पाटच्चरद्यूतकारलुब्धकगायकवादकैश्चानर्थ्यैः संयोगः कामः[१६] । तयोः परिभवाद्द्वेष्यता गरीयसी[१७] । परिभूतस्स्वैः परैश्चावगृह्यते[१८] । द्वेष्यः समुच्छिद्यत इति[१९] । द्रव्यनाशाच्छत्रुवेदनं गरीयः[२०] । द्रव्यनाशः कोशाबाधकः[२१] । शत्रुवेदनं प्राणबाधकमिति[२२] । अनर्थसंयोगाद्दुःखसंयोगो गरीयान्[२३] । अनर्थसंयोगो मुहूर्तप्रतीकारो दीर्घक्लेशकरो दुःखानामासङ्ग इति[२४] । तस्मात्कोपो गरीयान्[२५] । वाक्पारुष्यमर्थदूषणं दण्डपारुष्यमिति[२६] । वाक्पारुष्यार्थदूषणयोर्वाक्पारुष्यं गरीय इति विशालाक्षः[२७] । परुषमुक्तो हि तेजस्वी तेजसा प्रत्यारोहति[२८] । दुरुक्तशल्यं हृदि निखातं तेजः संदीपनमिन्द्रियोपतापि चेति[२९] । नेति कौटिल्यः[३०] । अर्थ-

पूजा वाक्छल्यमपहन्ति[31] । वृत्तिविलोपस्त्वर्थदूषणमदानमादानं विनाशः परित्यागो वार्थस्येत्यर्थदूषणम्[32] । अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीय इति पाराशराः[33] । अर्थमूलौ धर्मकामौ[34] । अर्थप्रतिबन्धश्च लोको वर्तते[35] । तस्योपघातो गरीयानिति[36] । नेति कौटिल्यः[37] । सुमहताप्यर्थेन न कश्चन शरीरविनाशमिच्छेत्[38] । दण्डपारुष्याच्च तमेव दोषमन्येभ्यः प्राप्नोति[39] । इति कोपजस्त्रिवर्गः[40] ।

कामजस्तु[41] । मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः[42] । तस्य मृगयाद्यूतयोर्मृगया गरीयसीति पिशुनः[43] । स्तेनामित्रव्यालदावप्रस्खलनभयादिङ्मोहाः क्षुत्पिपासे च प्राणाबाधस्तस्याम्[44] । द्यूते तु जितमेवाक्षविदुषा यथा जयत्सेनदुर्योधनाभ्यामिति[45] । नेति कौटिल्यः[46] । तयोरप्यन्यतरपराजयोऽस्तीति नलयुधिष्ठिराभ्यां व्याख्यातम्[47] । तदेव विजितद्रव्यमामिषं वैरबन्धश्च[48] । सतोऽर्थस्य विप्रतिपत्तिरसतश्चार्जनमप्रतिभुक्तनाशो मूत्रपुरीषधारणबुभुक्षादिभिश्च व्याधिलाभ इति द्यूतदोषाः । मृगयायां तु व्यायामः श्लेष्मपित्तमेदःस्वेदनाशश्चले स्थिते च काये लक्षपरिचयः कोपभयस्थाने हि तेषु च मृगाणां चित्तज्ञानमनित्ययानं चेति[50] । द्यूतस्त्रीव्यसनयोः कैतवव्यसनमिति कौणपदन्तः[51] । सातत्येन हि निशि प्रदीपे मातरि च मृतायां दीव्यत्येव कितवः[52] । कृच्छ्रे च प्रतिपृष्टः कुप्यति[53] । स्त्रीव्यसनेषु तु स्नानप्रतिकर्मभोजनभूमिषु भवत्येव धर्मार्थपरिप्रश्नः[54] । शक्या च स्त्री राजहिते नियोक्तुमुपांशुदण्डेन[55] । व्याधिना वा व्यावर्तयितुमवस्रावयितुं वेति[56] । नेति कौटिल्यः[57] । सप्रत्यादेयं द्यूतं निष्प्रत्यादेयं स्त्रीव्यसनमदर्शनं कार्यनिर्वेदः कालातिपातनादनर्थधर्मलोपश्च तन्त्रदौर्बल्यं पानानुबन्धश्चेति[58] । स्त्रीपानव्यसनयोः स्त्रीव्यसनमिति वातव्याधिः[59] । स्त्रीषु हि बालिश्यमनेकविधं निशान्तप्रणिधौ व्या-

ख्यातम्[६०]। पाने तु शब्दादीनामिन्द्रियार्थानामुपभोगः प्रीतिदानं परिजनपूजनं कर्मश्रमवधश्चेति[६१]। नेति कौटिल्यः[६२]। स्त्रीव्यसने भवत्यपत्योत्पत्तिरात्मरक्षणं चान्तर्दारेषु विपर्ययो वा बाह्येष्व-गम्येषु सर्वोच्छित्तिः[६३]। तदुभयं पानव्यसने[६४]। पानसंपत्संज्ञा-नाशो ऽनुन्मत्तस्योन्मत्तत्वमप्रेतस्य प्रेतत्वं कौपीनदर्शनं श्रुतप्र-ज्ञाप्राणवित्तमित्रहानिः सद्भिर्वियोगो ऽनर्थ्यसंयोगस्तंत्रीगीतनै-पुण्येषु चार्थघ्नेषु प्रसङ्ग इति[६५]। द्यूतमद्ययोः द्यूतमेकेषां पणनिमित्तो जयः पराजयो वा[६६]। प्राणिषु निश्चेतनेषु वा पक्षद्वैधेन प्रकृति-कोपं करोति[६७]। विशेषतश्च सङ्घानां सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः[६८]। तन्निमित्तो विनाश इत्यसत्परिग्रहः पापिष्ठ-तमो व्यसनानां तन्त्रदौर्बल्यादिति[६९]।

असतां प्रग्रहः कामः कोपश्चावग्रहः सताम्।
व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम्[७०]॥
तस्मात्कोपं च कामं च व्यसनारम्भमात्मवान्।
परित्यजेन्मूलहरं वृद्धसेवी जितेन्द्रियः[७१]॥

इति व्यसनाधिकारिके ऽष्टमे ऽधिकरणे पुरुषव्यसनवर्गस्तृतीयो ऽध्यायः ॥३॥

आदित एकोनविंशशततो ऽध्यायः ॥११९॥

---

१३०-१३२ प्रक. पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गश्च.

दैवपीडनमग्निरुदकं व्याधिर्दुर्भिक्षं मरक इति[१]। अग्न्युद-कयोरग्निपीडनमप्रतिकार्यम्[२]। सर्वदा हि च शक्योपशमनं तार्याबाधकमुदकपीडनमित्याचार्याः[३]। नेति कौटिल्यः[४]। अग्निर्ग्राममर्धग्रामं वा दहति[५]। उदकवेगस्तु ग्रामशतप्रवाहीति[६]। व्याधिदुर्भिक्षयोर्व्याधिः प्रेतव्याधितापसृष्टपरिचारकव्यायामोप-रोधेन कर्माण्युपहन्ति[७]। दुर्भिक्षं पुनरकर्मोपघाति हिरण्यपशुक-रदायि चेत्याचार्याः[८]। नेति कौटिल्यः। एकदेशपीडनो व्याधिः

शक्यप्रतीकारश्च[१०]। सर्वदेशपीडनं दुर्भिक्षं प्राणिनामजीवनायेति[११]। तेन मरको व्याख्यातः[१२]। क्षुद्रकमुख्यक्षययोः क्षुद्रकक्षयः कर्मणामयोगक्षेमं करोति[१३]। मुख्यक्षयः कर्मानुष्ठानोपरोधधर्मेत्याचार्याः[१४]। नेति कौटिल्यः[१५]। शक्यः क्षुद्रक्षयः प्रतिसंधातुं बाहुल्यात्क्षुद्रकाराणां न मुख्यक्षयः[१६]। सहस्रेषु हि मुख्यो भवत्येको न वा सत्त्वप्रज्ञाधिक्यात्तदाश्रयत्वात्क्षुद्रकाणामिति[१७]। स्वचक्रपरचक्रयोः स्वचक्रमतिमात्राभ्यां दण्डकराभ्यां पीडयत्यशक्यं च वारयितुम्[१८]। परचक्रं तु शक्यं प्रतियोद्धुमपसारेण संधिना वा मोक्षयितुमित्याचार्याः[१९]। नेति कौटिल्यः[२०]। स्वचक्रपीडनं प्रकृतिपुरुषमुख्योपग्रहविघाताभ्यां शक्यते वारयितुमेकदेशं वा पीडयति[२१]। सर्वदेशपीडनं तु परचक्रं विलोपघातदाहविध्वंसनोपवाहनैः पीडयतीति[२२]। प्रकृतिराजविवादयोः प्रकृतिविवादः प्रकृतीनां भेदकः पराभियोगानावहति[२३]। राजविवादस्तु प्रकृतीनां द्विगुणभक्तवेतनपरिहारकरो भवतीत्याचार्याः[२४]। नेति कौटिल्यः[२५]। शक्यः प्रकृतिविवादः प्रकृतिमुख्योपग्रहेण कलहस्थानापनयनेन वा वारयितुम्[२६]। विवदमानास्तु प्रकृतयः परस्परसङ्घर्षेणोपकुर्वन्ति[२७]। राजविवादस्तु पीडनोच्छेदनाय प्रकृतीनां द्विगुणव्यायामसाध्य इति[२८]। देशराजविहारयोः देशविहारस्त्रैकाल्येन कर्मफलोपघातं करोति[२९]। राजविहारस्तु कारुशिल्पिकुशीलववाग्जीवनवैदेहकोपकारं करोतीत्याचार्याः[२९]। नेति कौटिल्यः[३०]। देशविहारः कर्मश्रमवधार्थमल्पं भक्षयति[३१]। भक्षयित्वा च भूयः कर्मसु योगं गच्छति[३२]। राजविहारस्तु स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयतीति। सुभगाकुमारयोः कुमारः स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयति[३४]। सुभगा विलासोपभोगेनेत्याचार्याः[३५]। नेति कौटिल्यः[३६]। शक्यः कुमारो मन्त्रिपुरोहिताभ्यां वारयितुं न सुभगा बालिश्यादनर्थ्यजनसंयोगाच्चेति[३७]।

श्रेणीमुख्ययोः श्रेणी बाहुल्यादनवग्रहस्तेयसाहसाभ्यां पीडयति[३८]। मुख्यः कार्यावग्रहविघाताभ्यामित्याचार्याः[३९]। नेति कौटिल्यः[४०]। सुव्यावर्त्या श्रेणी समानशीलव्यसनत्वात्[४१]। श्रेणीमुख्यैकदेशोपग्रहेण वा[४२]। स्तम्भयुक्तो मुख्यः परप्राणद्रव्योपघाताभ्यां पीडयतीति[४३]। संनिधातृसमाहर्त्रोस्संनिधाता कृतविदूषणात्ययाभ्यां पीडयति[४४]। समाहर्ता करणाधिष्ठितः प्रदिष्टफलोपभोगी भवतीत्याचार्याः[४५]। नेति कौटिल्यः[४६]। संनिधाता कृतावस्थमन्यैः कोशप्रवेश्यं प्रतिगृह्णाति[४७]। समाहर्ता पूर्वमर्थमात्मनः कृत्वा पश्चाद्राजार्थं करोति प्रणाशयति वा परस्वादाने च स्वप्रत्ययश्चरतीति[४८]। अन्तपालवैदेहकयोरन्तपालश्चोरप्रसर्गदेयात्यादानाभ्यां वणिक्पथं पीडयति[४९]। वैदेहकास्तु पण्यप्रतिपण्यानुग्रहैः प्रसाधयन्तीत्याचार्याः[५०]। नेति कौटिल्यः[५१]। अन्तपालः पण्यसंपातानुग्रहेण वर्तयति[५२]। वैदेहकास्तु संभूय पण्यानामुत्कर्षापकर्षं कुर्वाणाः पणे पणशतं कुम्भे कुम्भशतमित्याजीवन्ति[५३]। अभिजातोपरुद्धा भूमिः पशुव्रजोपरुद्धा वेति[५४]। अभिजातोपरुद्धा भूमिः महाफलाप्यायुधीयोपकारिणी न क्षमा मोक्षयितुं व्यसनाबाधभयात्[५५]। पशुव्रजोपरुद्धा तु कृषियोग्या क्षमा मोक्षयितुम्[५६]। विवीतं हि क्षेत्रेण बाध्यत इत्याचार्याः[५७]। नेति कौटिल्यः[५८]। अभिजातोपरुद्धा भूमिरत्यन्तमहोपकारापि क्षमा मोक्षयितुम् व्यसनाबाधभयात्[५९]। पशुव्रजोपरुद्धा तु कोशवाहनोपकारिणी न क्षमा मोक्षयितुमन्यत्र सस्यवापोपरोधादिति[६०]। प्रतिरोधकाटविकयोः प्रतिरोधकाः रात्रिसत्त्वपराः शरीराक्रमिणो नित्याः शतसहस्रापहारिणः[६१]। प्रधानकोपकाश्च व्यवहिताः प्रत्यन्तारण्यचराश्चाटविकाः प्रकाशादृश्याश्चरन्त्येकदेशघातकाश्चेत्याचार्याः[६२]। नेति कौटिल्यः[६३]। प्रतिरोधकाः प्रमत्तस्यापहरन्ति[६४]। अल्पाः कुण्ठाः सुखाज्ज्ञातुं ग्रहीतुं च[६५]। स्वदेशस्थाः प्रभूता विक्रान्ताश्चा-

टविकाः प्रकाशयोधिनो ऽपहर्तारो हन्तारश्च देशानां राजसधर्माण इति[६६]। मृगहस्तिवनयोः मृगाः प्रभूताः प्रभूतमांसचर्मोपकारिणो मन्दग्रासावक्लेशिनः सुनियम्याश्च[६७]। विपरीता हस्तिनो गृह्यमाणा दुष्टाश्च देशविनाशायेति[६८]। स्वपरस्थानीयोपकारयोः स्वस्थानीयोपकारो धान्यपशुहिरण्यकुप्योपकारो जानपदानामापाद्यात्मधारणः[६९]। विपरीतः परस्थानीयोपकार इति पीडनानि[७०]। आभ्यन्तरो मुख्यस्तम्भो बाह्यो मित्राटवीस्तम्भ इति स्तम्भवर्गः[७१]। ताभ्यां पीडनैर्यथोक्तैश्च पीडितः सक्तो मुख्येषु परिहारोपहतः प्रकीर्णो मिथ्यासंभृतः सामन्ताटवीभृत इति कोशसङ्गः[७२]।

पीडनानामनुत्पत्तावुत्पन्नानां च वारणे।
यतेत देशवृद्ध्यर्थं नाशे च स्तम्भसङ्गयोः[७३]॥

इति व्यसनाधिकारिके ऽष्टमे ऽधिकरणे पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गः चतुर्थो ऽध्यायः ॥ ४ ॥ आदितो विंशतिशतो ऽध्यायः ॥ १२० ॥



१३३—१३४ प्रक बलव्यसनवर्गःमित्रव्यसनवर्गश्च.

बलव्यसनानि[१]। अमानितं विमानितमभृतं व्याधितं नवागतं दूरयातं परिश्रान्तं परिक्षीणं प्रतिहतं हताग्रवेगमनृतुप्राप्तमभूमिप्राप्तमाशानिर्वेदि परिसृप्तं कलत्रगर्ह्यन्तःशल्यं कुपितमूलं भिन्नगर्भमपसृतमतिक्षिप्तमुपनिविष्टं समाप्तमुपरुद्धमुपक्षिप्तं छिन्नधान्यपुरुषवीवधं स्वविक्षिप्तं मित्रविक्षिप्तं दूष्ययुक्तं दुष्टपार्ष्णिग्राहं शून्यमूलमस्वामिसंहतं भिन्नकूटमन्धमिति[२]। तेषाममानितविमानितयोरमानितं कृतार्थमानं युध्येत न विमानितमन्तःकोपम्[३]। अभृतव्याधितयोरभृतं तदात्वकृतवेतनं युध्येत न व्याधितमकर्मण्यम्[४]। नवागतदूरयातयोर्नवागतमन्यत उपलब्धदेशमनवमिश्रं युध्येत न दूरयातमायतगतपरिक्लेशम्[५]। परिश्रान्तपरिक्षीणयोः परि-

श्रान्तं स्नानभोजनस्वप्नलब्धविश्रमं युध्येत न परिक्षीणमन्यत्राहवे क्षीणयुग्यपुरुषम्[६]। प्रतिहतहताग्रवेगयोः प्रतिहतमग्रपातभग्नं प्रवीरपुरुषसंहतं युध्येत न हताग्रवेगमग्रपातहतप्रवीरम्[१०]। अनृत्वभूमिप्राप्तयोरनृतुप्राप्तं यथर्तुयोग्यशस्त्रावरणं युध्येत नाभूमिप्राप्तमवरुद्धप्रसारव्यायामम्[८]। आशानिर्वेदिपरिसृप्तयोराशानिर्वेदि लब्धाभिप्रायं युध्येत न परिसृप्तमपसृतम्[९]। कलत्रगर्ह्यन्तःशल्ययोः कलत्रगर्ह्युन्मुच्य कलत्रं युध्येत नान्तः शल्यमन्तरमित्रम्[१०]। कुपितमूलभिन्नगर्भयोः कुपितमूलं प्रशमितकोपं सामादिभिर्युध्येत न भिन्नगर्भमन्योन्यस्माद्भिन्नम्[११]। अपसृतातिक्षिप्तयोरपसृतमेकराज्यातिक्रान्तममन्त्रव्यायामाभ्यां सत्रिमित्रापाश्रयं युध्येत नातिक्षिप्तमनेकराज्यातिक्रान्तं बह्वाबाधत्वात्[१२]। उपनिविष्टसमाप्तयोरुपनिविष्टं पृथग्यानस्थानमतिसन्धाकारं युध्येत न समाप्तं परिणतैकस्थानयानम्[१३]। उपरुद्धपरिक्षिप्तयोरुपरुद्धमन्यतो निष्क्रम्योपरोद्धारं प्रतियुध्येत न परिक्षिप्तं सर्वतः प्रतिरुद्धम्[१४]। छिन्नधान्यपुरुषवीवधयोः छिन्नधान्यमन्यतो धान्यमानीय जङ्गमस्थावराहारं वा युध्येत न छिन्नपुरुषवीवधमनभिसारम्[१५]। स्वविक्षिप्तमित्रविक्षिप्तयोः स्वविक्षिप्तं स्वभूमौ विक्षिप्तं सैन्यमापदि शक्यमपस्रावयितुं न मित्रविक्षिप्तं विप्रकृष्टदेशकालत्वात्[१६]। दूष्ययुक्तदुष्टपार्ष्णिग्राहयोर्दूष्ययुक्तमाप्तपुरुषाधिष्ठितमसंहतं युध्येत न दुष्टपार्ष्णिग्राहं पृष्ठाभिघातत्रस्तम्[१७]। शून्यमूलास्वामिसंहतयोः शून्यमूलं कृतपौरजानपदारक्षं सर्वसंदोहेन युध्येत नास्वामिसंहतं राजसेनापतिहीनम्[१८]। भिन्नकूटान्धयोर्भिन्नकूटमन्याधिष्ठितं युध्येत नान्धमदेशिकमिति[१९]।

दोषशुद्धिर्बलावापः सत्रस्थानातिसंधानम्।
संधिश्चोत्तरपक्षस्य बलव्यसनसाधनम्[२०]॥

रक्षेत्स्वदण्डं व्यसने शत्रुभ्यो नित्यमुत्थितः ।
प्रहरेद्दण्डरन्ध्रेषु शत्रूणां नित्यमुत्थितः[२१] ॥
यतोनिमित्तं व्यसनं प्रकृतीनामवाप्नुयात् ।
प्रागेव प्रतिकुर्वीत तन्निमित्तमतन्द्रितः[२२] ॥
अभियातं स्वयं मित्रं संभूयान्यवशेन वा ।
परित्यक्तमशक्त्या वा लोभेन प्रणयेन वा[२३] ॥
विक्रीतमभियुञ्जाने संग्रामे वापवर्तिना ।
द्वैधीभावेन वा मित्रं यास्यता वान्यमन्यतः[२४] ॥
पृथग्वा सहयाने वा विश्वासेनातिसंहितम् ।
भयावमानलास्यैर्वा व्यसनान्न प्रमोक्षितम्[२५] ॥
अवरुद्धं स्वभूमिभ्यः समीपाद्वा भयाद्गतम् ।
आच्छेदनाददानाद्वा दत्त्वा वाप्यमानितम्[२६] ॥
अत्याहारितमर्थं वा स्वयं परमुखेन वा ।
अतिभारे नियुक्तं वा भङ्क्त्वा परमवस्थितम्[२७] ॥
उपेक्षितमशक्त्या वा प्रार्थयित्वा विरोधितम् ।
कृच्छ्रेण साध्यते मित्रं सिद्धं चाशु विरज्यति[२८] ॥
कृतप्रयासं मान्यं वा मोहान्मित्रममानितम् ।
मानितं वा न सदृशं शक्तितो वा निवारितम्[२९] ॥
मित्रोपघातत्रस्तं वा शङ्कितं वारिसंहितात् ।
दूष्यैर्वा भेदितं मित्रं साध्यं सिद्धं च तिष्ठति[३०] ॥
तस्मान्नोत्पादयेदेनान्दोषान्मित्रोपघातकान् ।
उत्पन्नान्वा प्रशमयेद्गुणैर्दोषोपघातिभिः[३१] ॥

इति व्यसनाधिकारिके ऽष्टमेऽधिकरणे बलव्यसनवर्गः, मित्रव्यसनवर्गः पञ्चमो ऽध्यायः ॥ ५ ॥ आदित एकविंशतिशतो ऽध्यायः ॥ १२१ ॥

एतावता कौटिलीयस्यार्थशास्त्रस्य व्यसनाधिकारिकं अष्टममधिकरणं समाप्तम् ॥ ८ ॥

# ९. अधि. अभियास्यत्कर्म.

## १३५. १३६. प्रक. शक्तिदेशकालबलाबलज्ञानं यात्राकालाश्च.

विजिगीषुरात्मनः परस्य च बलाबलं शक्तिदेशकालयात्राकालबलसमुत्थानकालपश्चात्कोपक्षयव्ययलाभापदां ज्ञात्वा विशिष्टबलो यायात्[१]। अन्यथासीत[२]। उत्साहप्रभावयोरुत्साहः श्रेयान्। स्वयं हि राजा शूरो बलवानरोगः कृतास्त्रो दण्डद्वितीयोऽपि शक्तः प्रभाववन्तं राजानं जेतुम्[३]। अल्पोऽपि चास्य दण्डस्तेजसा कृत्यकरो भवति[४]। निरुत्साहस्तु प्रभाववान्राजा विक्रमाभिपन्नो नश्यतीत्याचार्याः[५]। नेति कौटिल्यः[६]। प्रभाववानुत्साहवन्तं राजानं प्रभावेनातिसंधत्ते[७]। तद्विशिष्टमन्यं राजानमावाह्य हृत्वा क्रीत्वा प्रवीरपुरुषान्प्रभूतप्रभावहयहस्तिरथोपकरणसंपन्नश्चास्य दण्डः सर्वत्राप्रतिहतश्चरति[८]। उत्साहवन्तश्च प्रभाववन्तो जित्वा क्रीत्वा च स्त्रियो बालाः पङ्गवोऽन्धाश्च पृथिवीं जिग्युरिति[९]। प्रभावमन्त्रयोः प्रभावः श्रेयान्[१०]। मन्त्रशक्तिसंपन्नो हि वन्ध्यबुद्धिरप्रभावो भवति[११]। मन्त्रकर्म चास्य निश्चितमप्रभावो गर्भधान्यमवृष्टिरिवोपहन्तीत्याचार्याः[१२]। नेति कौटिल्यः[१३]। मन्त्रशक्तिः श्रेयसी[१४]। प्रज्ञाशास्त्रचक्षुर्हि राजाल्पेनापि प्रयत्नेन मन्त्रमाधातुं शक्तः परानुत्साहप्रभावतश्च सामादिभिर्योगोपनिषद्भ्यां चातिसंन्धातुम्[१५]। एवमुत्साहप्रभावमन्त्रशक्तीनामुत्तरोत्तराधिकोऽतिसंधत्ते[१६]। देशः पृथिवी[१७]। तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणमतिर्यक्चक्रवर्तिक्षेत्रम्[१८]। तत्रारण्यो ग्राम्यः पार्वत औदको भौमः समो विषम इति विशेषाः[१९]। तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत[२०]। यत्रात्मनः सैन्यव्यायामानां भूमिरभूमिः परस्य स उत्तमो देशः विपरीतोऽधमः साधारणो मध्यमः[२१]। कालः शीतोष्णवर्षात्मा[२२]। तस्य रात्रिरहः

पक्षो मास ऋतुरयनं संवत्सरो युगमिति विशेषाः[२३] । तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत[२४] । यत्रात्मनः सैन्यव्यायामानामृतुरनृतुः परस्य स उत्तमः कालो विपरीतो ऽधमः साधारणो मध्यमः[२५] । शक्तिदेशकालानां तु शक्तिः श्रेयसीत्याचार्याः[२६] । शक्तिमान्हि निम्नस्थलवतो देशस्य शीतोष्णवर्षवतश्च कालस्य शक्तः प्रतीकारे भवति[२७] । देशः श्रेयानित्येके[२८] । स्थलगतो हि श्वा नक्रं विकर्षति निम्नगतो नक्रः श्वानमिति[२९] । कालः श्रेयानित्येके[३०] । दिवा काकः कौशिकं हन्ति रात्रौ कौशिकः काकमिति[३१] । नेति कौटिल्यः[३२] । परस्परसाधका हि शक्तिदेशकालाः[३३] । तैरभ्युच्चितस्तृतीयं चतुर्थं वा दण्डस्यांशमूले पार्ष्ण्यां प्रत्यन्ताटवीषु च रक्षां विधाय कार्यसाधनसहं कोशदण्डं चादाय क्षीणपुराणभक्तमगृहीतनवभक्तमसंस्कृतदुर्गममित्रं वार्षिकं चास्य सस्यं, हैमनं च मुष्टिमुपहन्तुं मार्गशीर्षीं यात्रां यायात्[३४] । हैमनं चास्य सस्यं वासन्तिकं च मुष्टिमुपहन्तुं चैत्रीं यात्रां यायात्[३५] । क्षीणतृणकाष्ठोदकमसंस्कृतदुर्गममित्रं वासन्तिकं चास्य सस्यं वार्षिकीं वा मुष्टिमुपहन्तुं ज्येष्ठामूलीयां यात्रां यायात्[३६] । अत्युष्णमल्पयवसेन्धनोदकं वा देशं हेमन्ते यायात्[३७] । तुषारदुर्दिनमगाधनिम्नप्रायं गहनतृणवृक्षं वा देशं ग्रीष्मे यायात्[३८] । स्वसैन्यव्यायामयोग्यं परस्यायोग्यं वर्षति यायात्[३९] । मार्गशीर्षीं तैषीं चान्तरेण दीर्घकालां यात्रां यायात्[४०] । चैत्रीं वैशाखीं चान्तरेण मध्यमकालां ज्येष्ठामूलीयामाषाढीं चान्तरेण ह्रस्वकालामुपोषिष्यन्व्यसने चतुर्थीम्[४१] । व्यसनाभियानं विगृह्ययाने व्याख्यातम्[४२] । प्रायशश्चाचार्याः परव्यसने यातव्यमित्युपदिशन्ति[४३] । शक्त्युदये यातव्यमनैकान्तिकत्वाद्व्यसनानामिति कौटिल्यः[४४] । यदा वा प्रयातः कर्शयितुमुच्छेत्तुं वा शक्नुयादमित्रं तदा यायात्[४५] । अत्युष्णोपक्षीणे काले हस्तिबलप्रायो यायात्[४६] ।

हस्तिनो ह्यन्तःस्वेदाः कुष्ठिनो भवन्ति[४९] । अनवगाहमानास्तोयमपिबन्तश्चान्तरवक्षाराच्चान्धीभवन्ति[४८] । तस्मात्प्रभूतोदके देशे वर्षति च हस्तिबलप्रायो यायात्[४९] । विपर्यये खरोष्ट्राश्वबलप्रायो देशमल्पवर्षपङ्कम्[५०] । वर्षति मरुप्रायं चतुरङ्गबलो यायात्[५१] । समविषमनिम्नस्थलह्रस्वदीर्घवशेन वाध्वनो यात्रां विभजेत्[५२] ।

सर्वा वा ह्रस्वकालाः स्युर्यातव्याः कार्यलाघवात् ।
दीर्घाः कार्यगुरुत्वाद्वा वर्षावासः परत्र च[५३] ॥

इत्यभियास्यत्कर्मणि नवमे ऽधिकरणे शक्तिदेशकालबलाबलज्ञानं यात्राकालाः प्रथमो ऽध्यायः ॥१॥ आदितो द्वात्रिंशशतो ऽध्यायः ॥१३२॥



## १३७—१३९ प्रक. बलोपदानकालाः संनाहगुणाः प्रतिबलकर्म च.

मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः[१] । मूलरक्षणादतिरिक्तं मौलबलम्[२] । अत्यावापयुक्ता वा मौला मूले विकुर्वीरन्निति[३] । बहुलानुरक्तमौलबलः सारबलो वा प्रतियोद्धा व्यायामेन योद्धव्यमिति[४] । प्रकृष्टे ऽध्वनि काले वा क्षयव्ययसहत्वान्मौलानामिति[५] । बहुलानुरक्तसंपादिते च यातव्यस्योपजापभयादन्यसैन्यानां भृतानामविश्वासे बलक्षये वा सर्वसैन्यानामिति मौलबलकालः[६] । प्रभूतं मे भृतबलमल्पं च मौलबलमिति[७] । परस्याल्पं विरक्तं वा मौलबलं फल्गुप्रायमसारं वा भृतसैन्यमिति[८] । मन्त्रेण योद्धव्यमल्पव्यायामेनेति[९] । ह्रस्वो देशः कालो वा तनुक्षयव्यय इति[१०] । अल्पपापं शान्तोपजापं विश्वस्तं वा मे सैन्यमिति[११] । परस्याल्पः प्रसारो हन्तव्य इति भृतबलकालः[१२] । प्रभूतं मे श्रेणीबलं शक्यं मूले यात्रायां चाधातुमिति[१३] । ह्रस्वः प्रवासः श्रेणीबलप्रायः प्रतियोद्धा मन्त्रव्यायामाभ्यां प्रतियोद्धुकामो दण्डबलव्यवहार इति श्रेणीबलकालः[१४] । प्रभूतं मे मित्रबलं

शक्यं मूले यात्रायां चाधातुमल्पः प्रवासो मन्त्रयुद्धाच्च भूयो व्यायामयुद्धमिति[१५]। मित्रबलेन वा पूर्वमटवीनगरस्थानमासारं वा योधयित्वा पश्चात्स्वबलेन योधयिष्यामि[१६]। मित्रसाधारणं वा मे कार्यम्[१७]। मित्रायत्ता वा मे कार्यसिद्धिः[१८]। आसन्नमनुग्राह्यं वा मे मित्रमत्याबापं वास्य साधयिष्यामीति मित्रबलकालः[१९]। प्रभूतं मे शत्रुबलं शत्रुबलेन योधयिष्यामि नगरस्थानमटवीं वा[२०]। तत्र मे श्ववराहयोः कलहे चण्डालस्येवान्यतरासिद्धिर्भविष्यति[२१]। आसाराणामटवीनां वा कण्टकमर्दनमेतत्करिष्यामि[२२]। अत्युपचितं वा कोपभयान्नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्कायाः शत्रुयुद्धावरयुद्धकालश्चेत्यमित्रबलकालः[२३]। तेनाटवीबलकालो व्याख्यातः[२४]। मार्गदेशिकं परभूमियोग्यमरियुद्धप्रतिलोममटवीबलप्रायः शत्रुर्वा बिल्वं बिल्वेन हन्यतामल्पः प्रसारो हन्तव्य इत्यटवीबलकालः[२५]। सैन्यमनेकमनेकजातीयस्थमुक्तमनुक्तं वा विलोपार्थं यदुत्तिष्ठति तदौत्साहिकमभक्तवेतनं विलोमदृष्टिप्रतापकरं भेद्यं परेषामभेद्यं तुल्यदेशजातिशिल्पप्रायं संहतं महदिति बलोपादानकालाः[२६]। तेषां कुप्यभृतममित्राटवीबलं विलोपभृतं वा कुर्यात्[२७]। अमित्रस्य वा बलकाले प्रत्युत्पन्ने शत्रुमवगृह्णीयात्[२८]। अन्यत्र वा प्रेषयेत्[२९]। अफलं वा कुर्यात्[३०]। विक्षिप्तं वा वासयेत्[३१]। काले वातिक्रान्ते विसृजेत्[३२]। परस्य चैतद्बलसमुद्दानं विघातयेत्[३३]। आत्मनः संपादयेत्[३४]। पूर्वं पूर्वं चैषां श्रेयः संनाहयितुम्[३५]। तद्भावभावित्वान्नित्यसंस्कारानुगमाच्च मौलबलं भृतबलाच्छ्रेयः[३६]। नित्यानन्तरं क्षिप्रोत्थायि वश्यं च भृतबलं श्रेणीबलाच्छ्रेयः[३७]। जानपदमेकार्थोपगतं तुल्यसङ्घर्षामर्षसिद्धिलाभं च श्रेणीबलं मित्रबलाच्छ्रेयः[३८]। अपरिमितदेशकालमेकार्थोपगमाच्च मित्रबलममित्रबलाच्छ्रेयः[३९]। आर्याधिष्ठितममित्रबलमटवीबलाच्छ्रेयः[४०]। तदुभयं विलोपार्थम्[४१]। अविलोपे-

व्यसने च ताभ्यामहिभयं स्यात्[४२] । ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानां तेजःप्रधान्यात्पूर्वं पूर्वं श्रेयः । संनाहयितुमित्याचार्याः[४३] । नेति कौटिल्यः[४४] । प्रणिपातेन ब्राह्मबलं परोऽभिहारयेत्[४५] । प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः[४६] । बहुलसारं वा वैश्यशूद्रबलमिति[४७] । तस्मादेवंबलः परस्तस्यैतत्प्रतिबलमिति बलसमुद्दानं कुर्यात्[४८] । हस्तियन्त्रशकटगर्भकुन्तप्रासखर्वटकवेणुशल्यवद्धास्तिबलस्य प्रतिबलम्[४९] । तदेव पाषाणलगुडावरणाङ्कुशकचग्रहणीप्रायं रथबलस्य प्रतिबलम्[५०] । तदेवाश्वानां प्रतिबलं वर्मिणो वा हस्तिनोऽश्वा वा वर्मिणः[५१] । कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गबलस्य प्रतिबलम्[५२] ।

एवं बलसमुद्दानं परसैन्यनिवारणम् ।
विभवेन स्वसैन्यानां कुर्यादङ्गविकल्पशः[५३] ॥

इत्यभियास्यत्कर्मणि नवमे ऽधिकरणे बलोपादानकालाः संनाहगुणाः प्रतिबलकर्म द्वितीयो ऽध्यायः ॥ २॥ आदितस्त्रयोविंशशतो ऽध्यायः ॥ १२३ ॥

---

१४०—१४१ प्रक. पश्चात्कोपचिन्ता बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च.

अल्पः पश्चात्कोपो महान्पुरस्ताल्लाभ इति[१] । अल्पः पश्चात्कोपो गरीयान्[२] । अल्पं पश्चात्कोपं प्रयातस्य दूष्यामित्राटविका हि सर्वतः समेधयन्ति[३] । प्रकृतिकोपो वा लब्धमपि च महान्तं पुरस्ताल्लाभम्[४] । एवंभूते भृते भृत्यमित्रक्षयव्ययान् ग्रसन्ते तस्मात्सहस्रैकीयः पुरस्ताल्लाभस्यायोगः शतैकीयो वा पश्चात्कोप इति न यायात्[५] । सूचीमुखा ह्यनर्था इति लोकप्रवादः[६] । पश्चात्कोपे सामदानभेददण्डान्प्रयुञ्जीत[७] । पुरस्ताल्लाभे सेनापतिं कुमारं वा दण्डचारिणं कुर्वीत[८] । बलवान्वा राजा पश्चात्कोपावग्रहसमर्थः पुरस्ताल्लाभमादातुं यायात्[९] । आभ्यन्तरकोपशङ्कायां शङ्कितानादाय यायात्[१०] । बाह्यकोपशङ्कायां

वा पुत्रदारमेषामभ्यन्तरावग्रहं कृत्वा शून्यपालमनेकबलवर्गमनेकमुख्यं च स्थापयित्वा यायान्न यायाद्वा[11]। अभ्यन्तरकोपो बाह्यकोपात्पापीयानित्युक्तं पुरस्तात्[12]। मन्त्रिपुरोहितसेनापतियुवराजानामन्यतरकोपो ऽभ्यन्तरकोपः[13]। तमात्मदोषत्यागेन परशक्त्यपराधवशेन वा साधयेत्[14]। महापराधे ऽपि पुरोहिते संरोधनमपस्रावणं वा सिद्धिः[15]। युवराजे संरोधनं निग्रहो वा गुणवत्यन्यस्मिन्सति पुत्रे[16]। ताभ्यां मन्त्रिसेनापती व्याख्यातौ[17]। पुत्रं भ्रातरमन्यं वा कुल्यं राज्यग्राहिणमुत्साहेन साधयेत्[18]। उत्साहाभावे गृहीतानुवर्तनसंधिकर्मभ्यामरिसंधानभयादन्येभ्यस्तद्विधेभ्यो वा भूमिदानैर्विश्वासयेदेनम्[19]। तद्विशिष्टं स्वयंग्राहं दण्डं वा प्रेषयेत्[20]। सामन्ताटविकान्वा तैर्विगृहीतमतिसंदध्यात्[21]। अवरुद्धादानं पारग्रामिकं वा योगमातिष्ठेत्[22]। एतेन मन्त्रिसेनापती व्याख्यातौ[23]। मन्त्र्यादिवर्जानामन्तरमात्यानामन्यतरकोपो ऽन्तरमात्यकोपः[24]। तत्रापि यथार्हमुपायान्प्रयुञ्जीत[25]। राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्यकोपः[26]। तमन्योन्येनावग्राहयेत्[27]। अतिदुर्गप्रतिस्तब्धं वा सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेनावग्राहयेत्[28]। मित्रेणोपग्राहयेद्वा[29]। यथा नामित्रं गच्छेत्[30]। अमित्रात्सत्त्री भेदयेदेनम्[31]। अयं त्वां योगपुरुषं मन्यमानो भर्तर्येव विक्रमयिष्यति[32]। अवाप्तार्थो दण्डचारिणममित्राटविकेषु कृच्छ्रे वा प्रवासे योक्ष्यति[33]। विपुत्रदारमन्ते वा वासयिष्यति[34]। प्रतिहतविक्रमं त्वां भर्तरि पण्यं करिष्यति[35]। त्वया वा संधिं कृत्वा भर्तारमेव प्रसादयिष्यति[36]। मित्रमुपकृष्टं वास्य गच्छेति प्रतिपन्नमिष्टाभिप्रायैः पूजयेत्[37]। अप्रतिपन्नस्य संश्रयं भेदयेदसौ ते योगपुरुषः प्रणिहित इति[38]। सत्त्री चैनमभिव्यक्तशासनैर्घातयेत्[39]। गूढपुरुषैर्वा सहप्रस्थायिनो वास्य प्रवीरपुरुषान्यथाभिप्रायकरणेन वाहयेत्[40]। तेन प्रणिहिता-

न्सत्त्रीब्रयादिति सिद्धिः[४१] । परस्य चैनान्कोपानुत्थापयेत्[४२] । आत्मनश्च शमयेत्[४३] । यः कोपं कर्तुं शमयितुं वा शक्तस्तत्रोपजापः कार्यः[४४] । यः सत्यसंधः शक्तः कर्मणि फलावाप्तौ चानुग्रहीतुं विनिपाते च त्रातुं तत्र प्रतिजापः कार्यस्तर्कयितव्यश्च कल्याणबुद्धिरुताहो शठ इति[४५] । शठो हि बाह्यो ऽभ्यन्तरमेवमुपजपति[४६] । भर्तारं चेद्धत्वा मां प्रतिपादयिष्यति शत्रुवधो भूमिलाभश्च मे द्विविधो लाभो भविष्यति[४७] । अथ वा शत्रुरेनमाहनिष्यतीति[४८] । हतबन्धुपक्षस्तुल्यदोषदण्डेन वोद्विग्नश्च मे भूयात्[४९] । न कृत्यपक्षो भविष्यति[५०] । तद्विधे वान्यस्मिन्नपि शङ्कितो भविष्यति[५१] । अन्यमन्यं चास्य मुख्यमभिव्यक्तशासनेन घातयिष्यामीति[५२] । अभ्यन्तरो वा शठो बाह्यमेवमुपजपति[५३] । कोशमस्य हरिष्यामि[५४] । दण्डं वास्य हनिष्यामि[५५] । दुष्टं वा भर्तारमनेन घातयिष्यामि[५६] । प्रतिपन्नं बाह्यममित्राटविकेषु विक्रमयिष्यामि[५७] । चक्रमस्य सज्यताम्[५८] । वैरमस्य प्रसज्यताम्[५९] । ततः स्वाधीनो मे भविष्यति[६०] । ततो भर्तारमेव प्रसादयिष्यामि[६१] । स्वयं वा राज्यं ग्रहीष्यामि[६२] । बध्वा वा बाह्यभूमिं भर्तृभूमिं चोभयमवाप्स्यामि[६३] । विरुद्धं वा वाहयित्वा बाह्यं विश्वस्तं घातयिष्यामि[६४] । शून्यं वास्य मूलं हरिष्यामीति[६५] । कल्याणबुद्धिस्तु सहजीव्यर्थमुपजपति[६६] । कल्याणबुद्धिना संदधीत[६७] । शठं तथेति प्रतिगृह्यातिसंदध्यात्[६८] । इत्येवमुपलभ्यम्[६९] ।

परे परेभ्यः स्वे स्वेभ्यः स्वे परेभ्यः स्वतः परे ।
रक्ष्याः स्वेभ्यः परेभ्यश्च नित्यमात्मा विपश्चिता[७०] ॥

इत्यभियास्यत्कर्मणि नवमे ऽधिकरणे पश्चात्कोपचिन्ता, बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च तृतीयो ऽध्यायः ॥ ३ ॥ आदितश्चतुर्विंशशतो ऽध्यायः ॥ १२४ ॥

---

१४२ प्रक. क्षयव्ययलाभविपरिमर्शः

युग्यपुरुषापचयः क्षयः[१] । हिरण्यधान्यापचयो व्ययः[२] । ताभ्यां बहुगुणविशिष्टे लाभे यायात्[३] । आदेयः प्रत्यादेयः प्रसादकः प्रकोपको ह्रस्वकालस्तनुक्षयो ऽल्पव्ययो महान्वृद्ध्युदयः कल्यो धर्म्यः पुरोगश्चेति लाभसंपत्[४] । सुप्राप्यानुपाल्यः परेषामप्रत्यादेय इत्यादेयः[५] । विपर्यये प्रत्यादेयः[६] । तमाददानस्तत्रस्थो वा विनाशं प्राप्नोति[७] । यदि वा पश्येत्[८] । प्रत्यादेयमादाय कोशदण्डनिचयरक्षाविधानान्यवस्रावयिष्यामि[९] । खनिद्रव्यहस्तिवनसेतुबन्धवणिक्पथानुद्धृतसारान्करिष्यामि[१०] । प्रकृतीरस्य कर्शयिष्यामि[११] । अपवाहयिष्याम्यायोगेनाराधयिष्यामि वा[१२] । ताः परः प्रयोगेण कोपयिष्यति[१३] । प्रतिपक्षे वास्य पण्यमेनं करिष्यामि[१४] । मित्रमवरुद्धं वास्य प्रतिपादयिष्यामि[१५] । मित्रस्य स्वस्य देशस्य पीडामत्रस्थस्तस्करेभ्यःपरेभ्यश्च प्रतिकरिष्यामि[१६] । मित्रमाश्रयं वास्य वैगुण्यं ग्राहयिष्यामि[१७] । तदमित्रं विरक्तं तत्कुलीनं प्रतिपत्स्यते सत्कृत्य वास्मै भूमिं दास्यामीति संहितसमुत्थितं मित्रं मे चिराय भविष्यतीति प्रत्यादेयमपि लाभमाददीत[१८] । इत्यादेयप्रत्यादेयौ व्याख्यातौ[१९] । अधार्मिकाद्धार्मिकस्य लाभो लभ्यमानः स्वेषां परेषां च प्रसादको भवति[२०] । विपरीतः प्रकोप इति[२१] । मन्त्रिणामुपदेशाल्लाभो लभ्यमानः कोपको भवति[२२] । अयमस्माभिः क्षयव्ययो ग्राहित इति[२३] । दूष्यमन्त्रिणामनादराल्लाभो लभ्यमानः कोपको भवति[२४] । सिद्धार्थो ऽयमस्मान्विनाशयिष्यतीति विपरीतः प्रसादकः[२५] । इति प्रसादककोपकौ व्याख्यातौ[२६] । गमनमात्रसाध्यत्वाद्ध्रस्वकालः[२७] । मन्त्रसाध्यत्वात्तनुक्षयः[२८] । भक्तमात्रव्ययत्वादल्पव्ययः[२९] । तदात्ववैपुल्यान्महान्[३०] । अर्थानुबन्धकत्वाद्वृद्ध्युदयः[३१] । निराबाधकत्वात्कल्यः[३२] । प्रशस्तोपादानाद्धर्म्यः[३३] । सामवायिकानामनिर्बन्ध-

गामित्वात्पुरोग इति[३४]। तुल्ये लाभे देशकालौ शक्त्युपायौ प्रियाप्रियौ जवाजवौ सामीप्यविप्रकर्षौ तदात्वानुबन्धौ सारत्वासारत्वसातत्ये बाहुल्यबाहुगुण्ये च विमृश्य बहुगुणयुक्तं लाभमाददीत[३५]। लाभविघ्नाः कामः कोपः साध्वसं कारुण्यं ह्रीरनार्यभावो मानः सानुक्रोशता परलोकापेक्षा धार्मिकत्वमत्यागित्वं दैन्यमसूया हस्तगतावमानोदारात्मिकमविश्वासो भयमाग्निभितिकारः शीतोष्णवर्षाणामाक्षम्यं मङ्गलातिथिनक्षत्रेष्टित्वमिति[३६]।

नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते।
अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः[३७]॥
साधनाः प्राप्नुवन्त्यर्थान्नरा यत्नशतैरपि।
अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव[३८]॥

इत्याभियास्यत्कर्मणि नवमे ऽधिकरणे क्षयव्ययलाभविपरिमर्शः चतुर्थो ऽध्यायः ॥४॥ आदितः पञ्चविंशशतः ॥१२५॥

---

## १४३ प्रक. बाह्याभ्यन्तराश्चापदः.

संध्यादीनामयथोद्देशावस्थापनमपनयः[१]। तस्मादापदः संभवन्ति[२]। बाह्योत्पत्तिराभ्यन्तरप्रतिजापा आभ्यन्तरोत्पत्तिर्बाह्यप्रतिजापा बाह्योत्पत्तिर्बाह्यप्रतिजापा अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजापा इत्यापदः[३]। यत्र बाह्या अभ्यन्तरानुपजपन्त्यभ्यन्तरा वा बाह्यांस्तत्रोभययोगे प्रतिजपतः सिद्धिर्विशेषवती[४]। सुव्याजा हि प्रतिजपितारो भवन्ति नोपजपितारः[५]। तेषु प्रशान्तेषु नान्यांश्छक्नुयुरुपजपितुमुपजपितारः[६]। कृच्छ्रोपजापा हि बाह्यानामभ्यन्तरास्तेषामितरे वा महतश्च प्रयत्नस्य वधः परेषामर्थानुबन्धश्चात्मन इति[७]। अभ्यतरेषु प्रतिजपत्सु सामदाने प्रयुञ्जीत[८]। स्थानमानकर्म सान्त्वम्[९]। अनुग्रहपरिहारौ कर्मस्वायोगो वा दानम्[१०]। बाह्येषु प्रतिजपत्सु भेददण्डौ प्रयुञ्जीत[११]। सत्त्रिणो मित्रव्यञ्जना

बाह्यानां चारमेषां ब्रूयुः[१२]। अयं वो राजा दूष्यव्यञ्जनैरतिसंधातुकामो बुध्यध्वमिति[१३]। दूष्येषु वा दूष्यव्यञ्जनाः प्रणिहिता दूष्यान्बाह्यैर्भेदयेयुर्बाह्यान्वा दूष्यैः[१४]। दूष्याननुप्रविष्टा वा तीक्ष्णाः शस्त्ररसाभ्यां हन्युः[१५]। आहूय वा बाह्यान्घातयेयुरिति[१६]। यत्र बाह्या बाह्यानुपजपन्त्यभ्यन्तरानभ्यन्तरा वा, तत्रैकान्तयोगमुपजपितुः सिद्धिर्विशेषवती[१७]। दोषशुद्धौ हि दूष्या न विद्यन्ते[१८]। दूष्यशुद्धौ हि दोषः पुनरन्यान्दूषयति[१९]। तस्माद्बाह्येषूपजपत्सु भेददण्डौ प्रयुञ्जीत[२०]। सत्त्रिणो मित्रव्यञ्जना वा ब्रूयुः[२१]। अयं वो राजा स्वयमादातुकामो विगृहीता स्थानेन राज्ञा बुध्यध्वमिति[२२]। प्रतिजपितुर्वा ततो दूतदण्डाननुप्रविष्टास्तीक्ष्णाः शस्त्ररसादिभिरेषां छिद्रेषु प्रहरेयुः[२३]। ततः सत्त्रिणः प्रतिजपितारमभिशंसेयुः[२४]। अभ्यन्तरानभ्यन्तरेषूपजपत्सु यथार्हमुपायं प्रयुञ्जीत[२५]। तुष्टलिङ्गमतुष्टं विपरीतं वा साम प्रयुञ्जीत[२६]। शौचसामर्थ्यापदेशेन व्यसनाभ्युदयावेक्षणेन वा प्रतिपूजनमिति दानम्[२७]। मित्रव्यञ्जनो वा ब्रूयादेतान्[२८]। चित्तज्ञानार्थमुपधास्यति वो राजा[२९]। तदस्याख्यातव्यमिति[३०]। परस्पराद्वा भेदयेदेनान्[३१]। असौ च वो राजन्येवमुपजपति भेदो दाण्डकार्मिकवच्च दण्डः[३२]। एतासां चतसृणामापदामभ्यन्तरामेव पूर्वं साधयेत्[३३]। अहिभयादभ्यन्तरकोपो बाह्यकोपात्पापीयानित्युक्तं पुरस्तात्[३४]।

पूर्वं पूर्वं विजानीयाल्लघ्वीमापदमापदाम्।
उत्थितां बलवद्भ्यो वा गुर्वीं लघ्वीं विपर्यये[३५]॥

इत्यभियास्यत्कर्मणि नवमे ऽधिकरणे बाह्याभ्यन्तराश्च आपदः पञ्चमो ऽध्यायः ॥५॥

आदितः षड्विंशशतः ॥१२६॥

---

१४४ प्रक. दूष्यशत्रुसंयुक्ताः.

दूष्येभ्यः शत्रुभ्यश्च द्विविधाः शुद्धाः[१]। दूष्यशुद्धायां पौरेषु जानपदेषु वा दण्डवर्जानुपायान्प्रयुञ्जीत[२]। दण्डो हि महाजने

त्यक्तुमशक्यः[3] । क्षिप्तो वा तं चार्थं न कुर्यात्[4] । अन्यं चानर्थमुत्पादयेत्[5] । मुख्येषु त्वेषां दाण्डकार्मिकवच्चेष्टेतेति[6] । शत्रुशुद्धायां यतः शत्रुः प्रधानः कार्यो वा ततः सामादिभिः सिद्धिं लिप्सेत[7] । स्वामिन्यायत्ता प्रधानसिद्धिः[8] । मन्त्रिष्वायत्ता यत्नसिद्धिः[9] । उभयायत्ता प्रधानायत्ता सिद्धिः[10] । दूष्यादूष्याणामामिश्रितत्वादामिश्रा[11] । आमिश्रायामदूष्यतः सिद्धिः[12] । आलम्बनाभावे ह्यालम्बिता न विद्यते[13] । मित्रामित्राणामेकीभावात्परमिश्रा परमिश्रायां मित्रतः सिद्धिः[14] । सुकरो हि मित्रेण सिद्धिर्नामित्रेणेति[15] । मित्रं चेन्न संधिमिच्छेदभीक्ष्णमुपजपेत्[16] । ततः सत्त्रिभिरमित्राद्भेदयित्वा मित्रं लभेत[17] । मित्रसंघस्य वा योऽन्तःस्थायी तं लभेत[18] । अन्तःस्थायिनि लब्धे मध्यस्थायिनो भिद्यन्ते[19] । मध्यस्थायिनं वा लभेत[20] । मध्यस्थायिनि वा लब्धे नान्तःस्थायिनः संहन्यन्ते[21] । यथा चैषामाश्रयभेदस्तानुपायान्प्रयुञ्जीत[22] । धार्मिकं जातिकुलश्रुतवृत्तस्तवेन संबन्धेन पूर्वेषां त्रैकाल्योपकारानपकाराभ्यां वा सान्त्वयेत्[23] । निवृत्तोत्साहं विग्रहश्रान्तं प्रतिहतोपायं क्षयव्ययाभ्यां प्रवासेन चोपतप्तं शौचेनान्यं लिप्समानमन्यस्माद्वा शङ्कमानं मैत्रीप्रधानं वा कल्याणबुद्धिं साम्ना साधयेत्[24] । लुब्धं क्षीणं वा तपस्विमुख्यावस्थापनापूर्वं दानेन साधयेत्[25] । तत्पञ्चविधम्[26] । देयविसर्गो गृहीतानुवर्तनमात्तप्रतिदानं स्वद्रव्यदानपूर्वं परस्वेषु स्वयंग्राहदानं चेति दानकर्म[27] । परस्परद्वेषवैरभूमिहरणशङ्कितमतोऽन्यतमेन भेदयेत्[28] । भीरुं वा प्रतिघातेन[29] । कृतसंधिरेष त्वयि कर्म करिष्यति[30] । मित्रमस्य निसृष्टं संधौ वा नाभ्यन्तर इति[31] । यस्य वा स्वदेशादन्यदेशाद्वा पण्यानि पण्यागारतया गच्छेयुस्तान्यस्य यातव्याल्लब्धानीति सत्त्रिणश्चारयेयुः[32] । बहुलीभूते शासनमभिव्यक्तेन प्रेषयेत्[33] । एतत्ते पण्यं पण्यागारं वा मया ते प्रेषितम्[34] । सामवायिकेषु विक्रमस्वा-

पगच्छ वा[३५] । ततः पण्यशेषमवाप्स्यसीति[३६] । ततः सत्त्रिणः परेषु ग्राहयेयुः[३७] । एतदरिप्रदत्तमिति[३८] । शत्रुप्रख्यातं वा पण्यमविज्ञातं विजिगीषुं गच्छेत्[३९] । तदस्य वैदेहकव्यञ्जनाः शत्रुमुख्येषु विक्रीणीरन्[४०] । ततः सत्त्रिणः परेषु ग्राहयेयुः[४१] । एतत्पण्यमरिप्रदत्तमिति[४२] । महापराधानर्थमानाभ्यामुपगृह्य वा शस्त्ररसाग्निभिरमित्रेण प्रणिदध्यात्[४३] । अथैकममात्यं निष्पातयेत्[४४] । तस्य पुत्रदारमुपगृह्य रात्रौ हतमिति ख्यापयेत्[४५] । अथामात्यः शत्रोस्तानेकैकशः प्ररूपयेत्[४६] । ते चेद्यथोक्तं कुर्युर्न चैनान्ग्राहयेत्[४७] । अशक्तिमतो वा ग्राहयेत्[४८] । आप्तभावोपगतो मुख्यादस्यात्मानं रक्षणीयं कथयेत्[४९] । अथामित्रशासनममुख्यायोपघाताय प्रेषितमुभयवेतनो ग्राहयेत्[५०] । उत्साहशक्तिमतो वा प्रेषयेत्[५१] । अमुष्य राज्यं गृहाण यथास्थितो नः संधिरिति[५२] । ततः सत्त्रिणः परेषु ग्राहयेयुः[५३] । एकस्य स्कन्धावारं विविधमासारं वा घातयेयुः[५४] । इतरेषु मैत्रीं ब्रुवाणास्त्वमेतेषां घातयितव्य इत्युपजपेयुः[५५] । यस्य वा प्रवीरपुरुषो हस्ती हयो वा म्रियेत गूढपुरुषैर्हन्येत ह्रियेत वा तं सत्त्रिणः परस्परोपहतं ब्रूयुः[५६] । ततः शासनमभिशस्तस्य प्रेषयेत्[५७] । भूयः कुरु ततः पण्यशेषमवाप्स्यसीति[५८] । तदुभयवेतना ग्राहयेयुः[५९] । भिन्नेष्वन्यतमं लभेत[६०] । तेन सेनापतिकुमारदण्डचारिणो व्याख्याताः[६१] । साङ्घिकं च भेदं प्रयुञ्जीतेति भेदकर्म[६२] । तीक्ष्णमुत्साहिनं व्यसनिनं स्थितशत्रुं वा गूढपुरुषाः शस्त्राग्निरसादिभिः साधयेयुः सौकर्यतो वा तेषामन्यतमः[६३] । तीक्ष्णो ह्येकः शस्त्ररसाग्निभिः साधयेत्[६४] । अयं सर्वसंदोहकर्मविशिष्टं वा करोतीत्युपायचतुर्वर्गः[६५] । पूर्वः पूर्वश्चास्य लघिष्ठः[६६] । सान्त्वमेकगुणम्[६७] । दानं द्विगुणं सान्त्वदानभेदपूर्वम्[६८] । भेदस्त्रिगुणः सान्त्वदानपूर्वः[६९] । सान्त्वदण्डश्चतुर्गुणः सान्त्वदानभेदपूर्वः इत्यभियुञ्जानेषूक्तम्[७०] । स्वभूमिष्ठेषु तु त एवोपायाः[७१] । विशेषस्तु[७२] ।

स्वभूमिष्ठानामन्यतमस्य पण्यागारैरभिज्ञातान्दूतमुख्यानभीक्ष्णं प्रेषयेत्[73]। त एनं संधौ परहिंसायां वा योजयेयुः[74]। अप्रतिपाद्यमानं कृतो नः संधिरित्यावेदयेयुः[75]। तमितरेषामुभयवेतनाः संक्रामयेयुः[76]। अयं वो राजा दुष्ट इति[77]। यस्य वा यस्माद्भयं वैरं द्वेषो वा तं तस्माद्भेदयेयुः[78]। अयं ते शत्रुणा संधत्ते[79]। पुरा त्वामतिसंधत्ते क्षिप्रतरं संधीयस्व। निग्रहे चास्य प्रयतस्वेति[81]। आवाहविवाहाभ्यां वा कृत्वा संयोगमसंयुक्तान्भेदयेत्[82]। सामन्ताटविकतत्कुलीनावरुद्धैश्चैषां राज्यान्निर्घातयेत्[83]। सार्थव्रजाटवीभिर्वा दण्डं वाभिसृतं परस्परापाश्रयाश्चैषां जातिसङ्घच्छिद्रेषु प्रहरेयुः[84]। गूढाश्चाग्निरसशस्त्रेण[85]।

पीतं सगलवच्चारीन्योगैराचरितैः शठम्।
घातयेत्परमिश्रायां विश्वासेनामिषेण च[86]॥

इत्यभियास्यत्कर्मणि नवमे ऽधिकरणे दूष्यशत्रुसंयुक्ताः षष्ठो ऽध्यायः॥ ६॥
आदितः सप्तविंशशतः॥ १२७॥

## १४५—१४६. प्रक. अर्थानर्थसंशययुक्ताः तासामुपायविकल्पजाः सिद्धयश्च.

कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति[1]। अपनयो बाह्याः[2]। तदुभयमासुरी वृत्तिः[3]। स्वजनविकारः कोपः[4]। परवृद्धिहेतुष्वापदर्थो ऽनर्थः संशय इति[5]। यो ऽर्थः शत्रुवृद्धिमप्राप्तः प्राप्तः प्रत्यादेयः परेषां भवति प्राप्यमाणो वा क्षयव्ययोदयो भवति स भवत्यापदर्थः[6]। यथा सामन्तानामामिषभूतः सामन्तव्यसनजो लाभः शत्रुप्रार्थ्यो वा स्वभावाधिगम्यो वा लाभः पश्चात्कोपेन पार्ष्णिग्राहेण वा विगृहीतः पुरस्ताल्लाभो मित्रोच्छेदेन संधिव्यतिक्रमेण वा मण्डलविरुद्धो लाभ इत्यापदर्थः[7]। स्वतः परतो वा भयोत्पत्तिरित्यनर्थः[8]। तयोरनर्थो न वेति[9]। अर्थो ऽनर्थ इति[10]।

अनर्थो ऽर्थ इति संशयः[11]। शत्रुं मित्रमुत्साहयितुमर्थो न वेति संशयः[12]। शत्रुबलमर्थमानाभ्यामावाहयितुमनर्थो न वेति संशयः[13]। तेषामर्थसंशयमुपगच्छेत्[14]। अर्थो ऽर्थानुबन्धः[15]। अर्थो निरनुबन्धः[16]। अर्थो ऽनर्थानुबन्धः[17]। अनर्थो ऽर्थानुबन्धः[18]। अनर्थो निरनुबन्धः[19]। अनर्थो ऽनर्थानुबन्ध इत्यनर्थषड्वर्गः[20]। शत्रुमुत्पाट्य पार्ष्णिग्राहादानमर्थो ऽर्थानुबन्धः[21]। उदासीनस्य दण्डानुग्रहफलेन अर्थो निरनुबन्धः[22]। परस्यान्तरुच्छेदनमर्थो ऽनर्थानुबन्धः[23]। शत्रुप्रतिवेशस्यानुग्रहः कोशदण्डाभ्यामनर्थो ऽर्थानुबन्धः[24]। हीनशक्तिमुत्साह्य निवृत्तिरनर्थो निरनुबन्धः[25]। ज्यायांसमुत्थाप्य निवृत्तिरनर्थो ऽनर्थानुबन्धः[26]। तेषां पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम्[27]। इति कार्यावस्थापनम्[28]। समन्ततो युगपदर्थोत्पत्तिः समन्ततो ऽर्थाद्भवति[29]। सैव पार्ष्णिग्राहविगृहीता समन्ततो ऽर्थसंशयापद्भवति[30]। तयोर्मित्राक्रन्दोपग्रहात्सिद्धिः[31]। समन्ततः शत्रुभ्यो भयोत्पत्तिः समन्ततो ऽनर्थापद्भवति[32]। सैव मित्रविगृहीता समन्ततो ऽनर्थसंशयापद्भवति[33]। तयोश्चलामित्राक्रन्दोपग्रहात्सिद्धिः[34]। परमिश्राप्रतिकारो वा इतो लाभ इतरतो लाभ इत्युभयतो ऽर्थापद्भवति[35]। तस्यां समन्ततो ऽर्थायां च लाभगुणयुक्तमर्थमादातुं यायात्[36]। तुल्ये लाभगुणे प्रधानमासन्नमनतिपातनमूनोपायेन भवेत्तमादातुं यायात्[37]। इतो ऽनर्थ इतरतो ऽनर्थ इत्युभयतो ऽनर्थापत्[38]। तस्यां समन्ततो ऽनर्थायां च मित्रेभ्यः सिद्धिं लिप्सेत[39]। मित्रभावे प्रकृतीनां लघीयस्येकतोऽनर्थान्साधयेत्[40]।उभयतोऽनर्थाञ्ज्यायस्या समन्ततो ऽनर्थान्मूलेन प्रतिकुर्यात्[41]। अशक्ये समुत्सृज्यापगच्छेत्[42]। दृष्टा हि जीवतः पुनरावृत्तिर्यथा सुयात्रोदयनाभ्याम्[43]। इतो लाभ इतरतो राज्याभिमर्श इत्युभयतो ऽर्थानर्थापद्भवति[44]। तस्यामनर्थसाधको यो ऽर्थस्तमादातुं यायात्[45]। अन्यथा हि राज्याभिमर्शं

वारयेत्[४६] । एतया समन्ततो ऽर्थानर्थापद्व्याख्याता[४७] । इतो ऽनर्थ इतरतो ऽर्थसंशय इत्युभयतो ऽनर्थार्थसंशयः[४८] । तस्यां पूर्वमनर्थं साधयेत्[४९] । तत्सिद्धावर्थसंशयम्[५०] । एतया समन्ततो ऽनर्थार्थसंशया व्याख्याताः[५१] । इतो ऽर्थ इतरतो ऽनर्थसंशय इत्युभयतो ऽनर्थार्थसंशयो भवति[५२] । एतया समन्ततो ऽर्थानर्थसंशया व्याख्याताः[५३] । तस्यां पूर्वां पूर्वां प्रकृतीनामनर्थसंशयान्मोक्षयितुं यतेत[५४] । श्रेयो हि मित्रमनर्थसंशये तिष्ठन्न दण्डः दण्डो वा न कोश इति[५५] । समग्रमोक्षणाभावे प्रकृतीनामवयवान्मोक्षयितुं यतेत[५६] । तत्र पुरुषप्रकृतीनां च बहुलमनुरक्तं वा तीक्ष्णलुब्धवर्जं द्रव्यप्रकृतीनां सारं महोपकारं वा संधिनासनेन द्वैधीभावेन वा लघूनि विपर्ययैः गुरूणि[५७] । क्षयस्थानवृद्धीनां चोत्तरोत्तरं लिप्सेत[५८] । प्रातिलोम्येन वा क्षयादीनामायत्यां विशेषं पश्येत्[५९] । इति देशावस्थापनम्[६०] । एतेन यात्रामध्यान्तेष्वर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता[६१] । निरन्तरयोगित्वाच्चार्थानर्थसंशयानां यात्रादावर्थः श्रेयानुपसंप्राप्तुं पार्ष्णिग्राहासारप्रातिघातक्षयव्ययप्रवासप्रत्यादेयमूलरक्षणेषु च भवति[६२] । तथानर्थः संशयो वा स्वभूमिष्ठस्य विषह्यो भवति[६३] । एतेन यात्रामध्ये ऽर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता[६४] । यात्रान्ते तु कर्शनीयमुच्छेदनीयं वा कर्शयित्वोच्छिद्य वार्थः श्रेयानुपसंप्राप्तुं नानर्थः संशयो वा[६५] । पराबाधभयात्[६६] । सामवायिकानामपुरोगस्य तु यात्रामध्यान्तगो ऽनर्थः सशंयो वा श्रेयानुपसंप्राप्तुमनुबन्धगामित्वात्[६७] । अर्थो धर्मः काम इत्यर्थत्रिवर्गः[६८] । तस्य पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम्[६९] । अनर्थो ऽधर्मः शोक इत्यनर्थत्रिवर्गः । तस्य पूर्वः पूर्वः श्रेयान्प्रतिकर्तुम्[७१] । अर्थो ऽनर्थ इति धर्मो ऽध ें इति कामः शोक इति संशयत्रिवर्गः[७२] । तस्योत्तरपक्षसिद्धौ पूर्वपक्षः श्रेयानुपसंप्राप्तुम्[७३] । इति कालावस्थापनम्[७४] । इत्यापदः[७५] । तासां सिद्धिः[७६] ।

पुत्रभ्रातृबन्धुषु सामदानाभ्यां सिद्धिरनुरूपा पौरजानपददण्डमुख्येषु दानभेदाभ्यां सामन्ताटविकेषु भेददण्डाभ्याम्। एषानुलोमा विपर्यये प्रतिलोमा[७६]। मित्रामित्रेषु व्यामिश्रा सिद्धिः[७९]। परस्परसाधका ह्युपायाः[८०]। शत्रोः शङ्कितामात्येषु सान्त्वं प्रयुक्तं शेषप्रयोगं निवर्तयति[८१]। दूष्यामात्येषु दानं सङ्घातेषु भेदः शक्तिमत्सु दण्ड इति[८२]। गुरुलाघवयोगाच्चापदां नियोगविकल्पसमुच्चया भवन्ति[८३]। अनेनैवोपायेन नान्येनेति नियोगः[८४]। अनेन वान्येन वेति विकल्पः[८५]। अनेनान्येन चेति समुच्चयः[८६]। तेषामेकयोगाश्चत्वारस्त्रियोगाश्च[८७]। द्वियोगाः षट्[८८]। एकश्चतुर्योग इति पञ्चदशोपायाः[८९]। तावन्तः प्रतिलोमाः[९०]। तेषामेकेनोपायेन सिद्धिरेकसिद्धिः[९१]। द्वाभ्यां द्विसिद्धिः[९२]। त्रिभिस्त्रिसिद्धिः[९३]। चतुर्भिश्चतुःसिद्धिरिति[९४]। धर्ममूलत्वात्कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धायार्थस्य सिद्धिः सा सर्वार्थसिद्धिः[९५]। इति सिद्धयः। दैवादग्निरुदकं व्याधिः प्रमारो विद्रवो दुर्भिक्षमासुरी वृष्टिरित्यापदः। तासां दैवतब्राह्मणप्रणिपाततः सिद्धिः[९८]।

अवृष्टिरतिवृष्टिर्वा वृष्टिर्वा यासुरी भवेत्।
तस्यामाथर्वणं कर्म सिद्धारम्भाश्च सिद्धयः[९९]॥

इत्यभियास्यत्कर्मणि नवमे ऽधिकरणे अर्थानर्थसंशययुक्तास्तासामुपायविकल्पजाः सिद्धयश्च सप्तमो ऽध्यायः॥ ७॥ आदितो ऽष्टाविंशशतः॥ १२८॥

एतावता कौटिलीयस्यार्थशास्त्रस्य अभियास्यत्कर्म नवममधिकरणं समाप्तम्॥ ९॥

---

## १० अधि. सांग्रामिकम्.

### १४७. प्रक. स्कन्धावारनिवेशः.

वास्तुकप्रशस्तवास्तुनि नायकवर्धकिमौहूर्तिकाः स्कन्धावारं वृत्तं दीर्घं चतुरश्रं वा भूमिवशेन वा चतुर्द्वारं षट्पथं नवसंस्थानं

मापयेयुः[1]। खातवप्रसालद्वाराट्टालकसंपन्नाभये स्थाने च मध्यमस्योत्तरे नवभागे राजवास्तुनिवेशं कारयेद्धनुःशतायाममर्धविस्तारं पश्चिमार्धे तस्यान्तःपुरमन्तर्वंशिकसैन्यं चान्ते निविशेत्[2]। पुरस्तादुपस्थानं दक्षिणतः कोशशासनकार्यकरणानि वामतो राजोपवाह्यानां हस्त्यश्वरथानां स्थानमतो धनुःशतान्तराश्चत्वारः शकटमेथीप्रततीस्तम्भसालपरिक्षेपाः[3]। प्रथमे पुरस्तान्मन्त्रिपुरोहितौ दक्षिणतः कोष्ठागारं महानसं च वामतः कुप्यायुधागारम्[4]। द्वितीये मौलभृतानां स्थानमश्वरथानां सेनापतेश्च[5]। तृतीये हस्तिनः श्रेण्यः प्रशास्ता च[6]। चतुर्थे विष्टिर्नायको मित्रामित्राटवीबलं स्वपुरुषाधिष्ठितम्[7]। वणिजो रूपाजीवाश्चानुमहापथम्[8]। बाह्यतो लुब्धकश्वगणिनः सतूर्याग्नयः गूढाश्चारक्षाः[9]। शत्रूणामापाते कूपकूटावपातकण्टकिनीश्च स्थापयेत्[10]। अष्टादशवर्गाणामारक्षविपर्यासं कारयेत्[11]। दिवायामं च कारयेदपसर्पज्ञानार्थम्[12]। विवादसौरिकसमाजद्यूतवारणं च कारयेत्[13]। मुद्रारक्षणं च[14]। सेनानीवृत्तमायुधीयमशासनमन्तपालो ऽनुबध्नीयात्[15]।

पुरस्तादध्वनः सम्यक्प्रशास्ता ग्रहणानि च।
यायाद्वर्धकिविष्टिभ्यामुदकानि च कारयेत्[16] ॥

इति सांग्रामिके दशमे ऽधिकरणे स्कन्धावारनिवेशः प्रथमो ऽध्यायः ॥ १ ॥

आदित एकोनत्रिंशच्छतः ॥ १२९ ॥

---

## १४८-१४९ प्रक. स्कन्धावारप्रयाणं बलव्यसनावस्कन्दकालरक्षणं च.

ग्रामारण्यानामध्वनिवेशान्यवसेन्धनोदकवशेन परिसंख्याय स्थानासनगमनकालं च यात्रां यायात्[1]। तत्प्रतिकारद्विगुणं भक्तोपकरणं वाहयेत्[2]। अशक्तो वा सैन्येष्वेव प्रयोजयेत्[3]। अन्तरेषु वा निचिनुयात्[4]। पुरस्तान्नायकः[5]। मध्ये कलत्रं स्वामी च[6]। पार्श्वयोरश्वा बाहूत्सारः[7]। चक्रान्तेषु हस्तिनः प्रसारवृद्धिर्वा[8]।

सर्वतो वनाजीवः प्रसारः । स्वदेशादन्वायातिर्वीवधो मित्रबलमासारः स्वभूमितो यायात्[१०] । अभूमिष्ठानां हि स्वभूमिष्ठा युद्धे प्रतिलोमा भवन्ति[११] । योजनमधमा अध्यर्धं मध्यमा द्वियोजनमुत्तमाः संभाव्या चागतिः[१२] । पश्चात्सेनापतिर्यायात्[१३] । निविशेत पुरस्तात्[१४] । अभ्याघाते मकरेण यायात्पश्चाच्छकटेन पार्श्वयोर्वज्रेण समन्ततः सर्वतोभद्रेणैकायने सूच्या पथि द्वैधीभावे[१५] । आश्रयकारी संपन्नघाती पार्ष्णिरासारो मध्यम उदासीनो वा प्रतिकर्तव्यः[१६] । सङ्कटो मार्गः शोधयितव्यः[१७] । कोशो दण्डमित्रामित्राटवीबलं वृष्टिर्ऋतुर्वा प्रतीक्ष्याः[१८] । कृतदुर्गकर्मनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्चागमिष्यति उपजपितरो वा नातित्वरयन्ति शत्रुरभिप्रायं वा पूरयिष्यतीति शनैर्यायात्[१९] । विपर्यये शीघ्रम्[२०] । हस्तिस्तम्भसंक्रमसेतुबन्धनौकाष्ठवेणुसङ्घातैरलाबुचर्मकरण्डदृतिप्लवगण्डिकावेणिकाभिश्चोदकानि तारयेत्[२१] । तीर्थाभिग्रहे हस्त्यश्वैरन्यतो रात्रावुत्तार्य सत्त्रं गृह्णीयात्[२२] । अनुदके चक्रिचतुष्पदं चाध्वप्रमाणे शक्त्योदकं वाहयेत्[२३] । दीर्घकान्तारमनुदकं यवसेन्धनोदकहीनं वा कृच्छ्राध्वानमभियोगप्रस्कन्दनं क्षुत्पिपासाध्वक्लान्तं पङ्कतोयगम्भीराणां वा नदीदरीशैलानामुद्यानापयाने व्यासक्तमेकायनमार्गे शैलविषमे सङ्कटे वा बहुलीभूतं निवेशे प्रस्थिते विसंनाहं भोजनव्यासक्तमायतगतपरिश्रान्तमवसुप्तं व्याधिमरकदुर्भिक्षपीडितं व्याधितपत्त्यश्वद्विपमभूयिष्ठं वा बलव्यसनेषु वा स्वसैन्यं रक्षेत्[२४] । परसैन्यं चाभिहन्यात्[२५] । एकायनमार्गप्रयातस्य विश्वसेनानीश्चारग्रासहारशय्याप्रस्ताराग्निनिधानध्वजायुधसंख्यानेन परबलज्ञानं तदात्मनो गूहयेत्[२६] ।

पार्वतं वा नदीदुर्गं सापसारप्रतिग्रहम् ।
स्वभूमौ पृष्ठतः कृत्वा युध्येत निविशेत च[२७] ॥

इति सांग्रामिके दशमे ऽधिकरणे स्कन्धावारप्रयाणं, बलव्यसनावस्कन्दकालरक्षणं च द्वितीयो ऽध्यायः ॥ २ ॥ आदितस्त्रिंशच्छतः ॥ १३० ॥

### १५०-१५२ प्रक. कूटयुद्धविकल्पाः स्वसैन्योत्साहनं स्वबलान्यबलव्यायोगश्च.

बलविशिष्टः कृतोपजापः प्रतिविहितकर्तुः स्वभूम्यां प्रकाशयुद्धमुपेयात्[1] । विपर्यये शकटयुद्धम्[2] । बलव्यसनावस्कन्दकालेषु परमभिहन्यात्[3] । अभूमिष्ठं वा स्वभूमिष्ठः[4] । प्रकृतिप्रग्रहो वा स्वभूमिष्ठं दूष्यामित्राटवीबलैर्वा भङ्गं दत्त्वा विभूमिप्राप्तं हन्यात्[5] । संहतानीकं हस्तिभिर्भेदयेत्[6] । पूर्वं भङ्गप्रदानेनानुप्रलीनं भिन्नमभिन्नं प्रतिनिवृत्य हन्यात्[7] । पुरस्तादभिहत्य प्रचलं विमुखं वा पृष्ठतो हस्त्यश्वेनाभिहन्यात्[8] । पृष्ठतोऽभिहत्य प्रचलं विमुखं वा पुरस्तात्सारबलेनाभिहन्यात्[9]। ताभ्यां पार्श्वाभिघातौ व्याख्यातौ[10] । यतो वा दूष्यफल्गुबलं ततोऽभिहन्यात्[11] । पुरस्ताद्विषमायां पृष्ठतोऽभिहन्यात्[12] । पृष्ठतो विषमायां पुरस्तादभिहन्यात्[13] । पार्श्वतो विषमायामितरतोऽभिहन्यात्[14] । दूष्यामित्राटवीबलैर्वा पूर्वं योधयित्वा श्रान्तमश्रान्तः परमभिहन्यात्[15] । दूष्यबलेन वा स्वयं भङ्गं दत्त्वा जितमिति विश्वस्तमविश्वस्तः सत्त्रापाश्रयोऽभिहन्यात्[16] । सार्थव्रजस्कन्धावारसंवाहविलोपप्रमत्तमप्रमत्तोऽभिहन्यात्[17] । फल्गुबलावच्छन्नः सारबलो वा परवीराननुप्रविश्य हन्यात्[18] । गोग्रहणेन श्वापदवधेन वा परवीरानाकृष्य सत्त्रच्छन्नोऽभिहन्यात्[19] । रात्राववस्कन्देन जागरयित्वा निद्राक्लान्तानपसुप्तान्वा दिवा हन्यात्[20] । सपादचर्मकोशैर्वा हस्तिभिः सौप्तिकं दद्यात्[21] । अहःसंनाहपरिश्रान्तानपराह्णेऽभिहन्यात्[22] । शुष्कचर्मवृत्तशर्कराकोशकैर्गोमहिषोष्ट्रयूथैर्वा त्रस्नुभिरकृतहस्त्यश्वं भिन्नमभिन्नः प्रतिनिवृत्तं हन्यात्[23] । प्रतिसूर्यपातं वा सर्वमभिहन्यात्[24] । धान्वनवनसङ्कटपङ्कशैलनिम्नविषमनावो गावः शकटव्यूहो नीहारो रात्रिरिति सत्त्राणि[25] । पूर्वे च प्रहरणकालाः कूटयुद्धहेतवः[26] । संग्रामस्तु[27] । निर्दिष्टदेशकालो धर्मिष्ठः संहत्य दण्डं ब्रूयात्[28]। तुल्यवेतनोऽसि[29] । भवद्भिः सह भोग्यमिदं राज्यम्[30] । मयाभिहतः परो

ऽभिहन्तव्य इति[31] । वेदेष्वप्यनुश्रूयते[32] । समाप्तदक्षिणानां यज्ञानामवभृथेषु सा ते गतिर्या शूराणामिति[33] । अपीह श्लोकौ भवतः[34] ।

यान्यज्ञसङ्घैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति ।
क्षणेन तानप्यतियान्ति शूराः प्राणान्सुयुद्धेषु परित्यजन्तः[35] ॥
नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य माभून्नरकं च गच्छेद्यो भर्तृपिण्डस्य कृते न युध्येत्[36] ॥

इति मन्त्रिपुरोहिताभ्यामुत्साहयेद्योधान्[37] । व्यूहसंपदा कार्तान्तिकादिश्चास्य वर्गः सर्वज्ञदैवसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत्[38] । परपक्षं चोद्वेजयेत्[39] । श्वो युद्धमिति कृतोपवासः शस्त्रवाहनं चाधिशयीत[40] । अथर्वभिश्च जुहुयात्[41] । विजययुक्ताः स्वर्गीयाश्चाशिषो वाचयेत्[42] । ब्राह्मणेभ्यश्चात्मानमतिसृजेत्[43] । शौर्यशिल्पाभिजनानुरागयुक्तमर्थमानाभ्यामविसंवादितमनीकगर्भं कुर्वीत[44] । पितृपुत्रभ्रातृकाणामायुधीयानामध्वजं मुण्डानीकं राजस्थानं हस्ती रथो वा राजवाहनमश्वानुबन्धो यत्प्रायःसैन्यो यत्र वा विनीतः स्यात्तदधिरोहयेत्[45] । राजव्यञ्जनो व्यूहानुष्ठानमायोज्यः[46] । सूतमागधाः शूराणां स्वर्गमस्वर्गं भीरूणां जातिसंघकुलकर्मवृत्तस्तवं च योधानां वर्णयेयुः[47] । पुरोहितपुरुषा कृत्याभिचारं ब्रूयुः[48] । सत्त्रिकवर्धकिमौहूर्तिकाः स्वकर्मसिद्धिमसिद्धिं परेषाम्[49] । सेनापतिरर्थमानाभ्यामभिसंस्कृतमनीकमाभाषेत[50] । शतसाहस्रो राजवधः पञ्चाशत्साहस्रः सेनापतिकुमारवधो दशसाहस्रः प्रवीरमुख्यवधः पञ्चसाहस्रो हस्तिरथवधः साहस्रो ऽश्ववधः शत्यः पत्तिमुख्यवधः शिरो विंशतिकं भोगद्वैगुण्यं स्वयंग्राहश्चेति[51] । तदेषां दशवर्गाधिपतयो विद्युः[52] । चिकित्सकाः शस्त्रयन्त्रागदस्नेहवस्त्रहस्ताः स्त्रियश्चान्नपानरक्षिण्यः पुरुषाणामुद्धर्षणीयाः पृष्ठतस्तिष्ठेयुः[53] । अदक्षिणामुखं पृष्ठतः सूर्य-

मनुलोमवातमनीकं स्वभूमौ व्यूहेत[54]। परभूमिव्यूहे चाश्वांश्चारयेयुः[55]। यत्र स्थानं प्रजवश्चाभूमिव्यूहस्य तत्र स्थितः प्रजवितश्चोभयथा जीयेत[56]। विपर्यये जयति[57]। उभयथा स्थाने प्रजवे च[58]। समा विषमा व्यामिश्रा वा भूमिरिति पुरस्तात्पार्श्वाभ्यां पश्चाच्च ज्ञेया[59]। समायां दण्डमण्डलव्यूहाः[60]। विषमायां भोगसंहतव्यूहाः[61]। व्यामिश्रायां विषमव्यूहः[62]। विशिष्टबलं भङ्क्त्वा संधिं याचेत[63]। समबलेन याचितः संदधीत[64]। हीनमनुहन्यात्[65]। न त्वेव स्वभूमिप्राप्तं त्यक्तात्मानं वा[66]।

पुनरावर्तमानस्य निराशस्य च जीविते।
अधार्यो जायते वेगस्तस्माद्भग्नं न पीडयेत्[67]॥

इति सांग्रामिके दशमे ऽधिकरणे कूटयुद्धविकल्पाः स्वसैन्योत्साहनं स्वबलान्यबलव्यायोगश्च तृतीयो ऽध्यायः॥ ३ ॥ आदित एकत्रिंशच्छतः ॥ १३१ ॥

---

## १५३—१५४. प्रक. युद्धभूमयः पत्त्यश्वरथहस्तिकर्माणि च

स्वभूमिः पत्त्यश्वरथद्विपानामिष्टा युद्धे निवेशे च[1]। धान्वनवननिम्नस्थलयोधिनां खनकाकाशदिवारात्रियोधिनां च पुरुषाणां नादेयपर्वतानूपसारसानां च हस्तिनामश्वानां च यथास्वमिष्टा युद्धभूमयः कालाश्च[2]। समा स्थिराभिकाशा निरुत्खातिन्यचक्रखुरानक्षग्राहिण्यवृक्षगुल्मप्रतती स्तम्भकेदारश्वभ्रवल्मीकसिकताभङ्गभङ्गुरा दरणहीना च रथभूमिः[3]। हस्त्यश्वयोर्मनुष्याणां च समे विषमे हिता युद्धे निवेशे च[4]। अणवश्मवृक्षा ह्रस्वलङ्घनीयश्वभ्रा मन्ददरणदोषा चाश्वभूमिः[5]। स्थूलस्थाण्वश्मवृक्षप्रतती वल्मीकगुल्मा पदातिभूमिः[6]। गम्यशैलविषमा निम्नविषमा मर्दनीयवृक्षा छेदनीयप्रतती पङ्कभङ्गुरा दरणहीना च हस्तिभूमिः[7]। अकण्टकिन्यबहुविषमा प्रत्यासारवतीति

पदातीनामतिशयः । द्विगुणप्रत्यासारा कर्दमोदकखञ्जनहीना निःशर्करेति वाजिनामतिशयः । पांसुकर्दमोदकनलशराधानवती श्वदंष्ट्रहीना महावृक्षशाखाघातवियुक्तेति हस्तिनामतिशयः[१०] । तोयाशयाश्रयवती निरुत्खातिनी केदारहीना व्यावर्तनसमर्थेति रथानामतिशयः[११] । उक्ता सर्वेषां भूमिः[१२] । एतया सर्वबलनिवेशानि युद्धानि च व्याख्यातानि भवन्ति[१३] । भूमिवासवननिचयो विषमतोयतीर्थवातरश्मिग्रहणं वीवधासारयोर्घातो रक्षा वा विशुद्धिस्थापना च बलस्य प्रसारवृद्धिर्बाहूत्सारः पूर्वप्रहारो व्यावेशनं व्यावेधनमाश्वासो ग्रहणं मोक्षणं मार्गानुसारविनिमयः कोशकुमाराभिहरणं जघनकोट्यभिघातो हीनानुसारणमनुयानं समाजकर्मेत्यश्वकर्माणि[१४] । पुरोयानमकृतमार्गवासतीर्थकर्म बाहूत्सारस्तोयतरणावतरणे स्थानगमनावतरणं विषमसंबाधः प्रवेशोऽग्निदानशमनमेकाङ्गविजयः भिन्नसंधानमभिन्नभेदनं व्यसने त्राणमभिघातो विभीषिका त्रासनमौदार्यं ग्रहणं मोक्षणं सालद्वाराट्टालकभञ्जनं कोशवाहनमिति हस्तिकर्माणि[१५] । स्वबलरक्षा चतुरङ्गबलप्रतिषेधः संग्रामे ग्राहणं मोक्षणं भिन्नसंधानमभिन्नभेदनं त्रासनमौदार्यं भीमघोषश्चेति रथकर्माणि[१६] । सर्वदेशकालशस्त्रवहनं व्यायामश्चेति पदातिकर्माणि[१७] । शिबिरमार्गसेतुकूपतीर्थशोधनकर्मयन्त्रायुधावरणोपकरणग्रासवहनमायोधनाच्च प्रहरणावरणप्रतिविद्धापनयनमिति विष्टिकर्माणि[१८] ।

कुर्याद्गवाश्वव्यायोगं रथेष्वल्पहयो नृपः ।
खरोष्ट्रशकटानां वा गर्भमल्पगजस्तथा[१९] ॥

इति सांग्रामिके दशमे ऽधिकरणे युद्धभूमयः पत्त्यश्वरथहस्तिकर्माणि चतुर्थो ऽध्यायः ॥ ४ ॥ आदितो द्वात्रिंशशतः ॥ १३२ ॥

### १५५—१५७ प्रक. पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः सारफल्गुबलविभागः पत्त्यश्वरथहस्तियुद्धानि च.

पञ्चधनुःशतापकृष्टदुर्गमवस्थाप्य युद्धमुपेयात्[1] । भूमिवशेन वा विभक्तमुख्यामचक्षुर्विषये मोक्षयित्वा सेनां सेनापतिनायकौ व्यूहेयाताम्[2] । शमान्तरं पत्तिं स्थापयेत्[3] । त्रिशमान्तरमश्वं पञ्चशमान्तरं रथं हस्तिनं वा द्विगुणान्तरं त्रिगुणान्तरं वा व्यूहेत[4] । एवं यथासुखमसंबाधं युध्येत[5] । पञ्चारत्नि धनुः[6] । तस्मिन्धन्विनं स्थापयेत्[7] । त्रिधनुष्यश्वं पञ्चधनुषि रथं हस्तिनं वा[8] । पञ्चधनुरनीकसंधिः पक्षकक्षोरस्यानाम्[9] । अश्वस्य त्रयः पुरुषाः प्रतियोद्धारः[10] । पञ्चदश रथस्य हस्तिनो वा पञ्च चाश्वाः[11] । तावन्तः पादगोपा वाजिरथद्विपानां विधेयाः[12] । त्रीणि त्रिकाण्यनीकं रथानामुरस्यं स्थापयेत्[13] । तावत्कक्षं पक्षं चोभयतः पञ्चचत्वारिंशत्[14] । एवं रथा रथव्यूहे भवन्ति[15] । द्वे शते पञ्चविंशतिश्चाश्वाः[16] । षट्शतानि पञ्चसप्ततिश्च पुरुषाः प्रतियोद्धारः[17] । तावन्तः पादगोपा वाजिरथद्विपानाम्[18] । एष समव्यूहः[19] । तस्य द्विरथो वृद्धिरा एकविंशतिरथात्[20] । इत्येवमोजा दश समव्यूहप्रकृतयो भवन्ति[21] । पक्षकक्षोरस्यानामतो विषमसंख्याने विषमव्यूहः[22] । तस्यापि द्विरथोत्तरा वृद्धिरा एकविंशतिरथात्[23] । इत्येवमोजा दश विषमव्यूहप्रकृतयो भवन्ति[24] । अतः सैन्यानां व्यूहशेषमावापः कार्यः[25] । रथानां द्वौ त्रिभागावङ्गेष्वावापयेत्[26] । शेषमुरस्यं स्थापयेत्[27] । एवं त्रिभागोनो रथानामावापः कार्यः[28] । तेन हस्तिनामश्वानामावापो व्याख्यातः[29] । यावदश्वरथद्विपानां युद्धसंबाधनं न कुर्यात्तावदावापः कार्यः[30] । दण्डबाहुल्यमावापः[31] । पत्त्यबाहुल्यं प्रत्यावापः[32] । एकाङ्गबाहुल्यमन्वावापः[33] । दूष्यबाहुल्यमत्यावापः[34] । परावापात्प्रत्यावापादाचतुर्गुणादाष्टगुणादिति वा विभवतः सैन्यानामावापः कार्यः[35] । रथव्यूहेन हस्तिव्यूहो व्याख्यातः[36] । व्यामिश्रो वा हस्तिरथाश्वानाम्[37] । चक्रान्तेषु हस्तिनः पार्श्वयोरश्वा मुख्या

रथा उरस्यहस्तिनामुरस्यं रथानां कक्षावश्वानां पक्षाविति मध्यभेदी[३८] । विपरीतो ऽन्तभेदी[३९] । हस्तिनामेव तु शुद्धः संनाह्यानामुरस्यमावापबाह्यानां जघनं व्यालानां कोट्याविति[४०] । अश्वव्यूहो वर्मिणामुरस्यं शुद्धानां कक्षपक्षाविति[४१] । पत्तिव्यूहः पुरस्तादावरणिनः पृष्ठतो धन्विन इति[४२] । शुद्धाः पत्तयः पक्षयोरश्वाः पार्श्वयोर्हस्तिनः पृष्ठतो रथाः पुरस्तात्परव्यूहवशेन वा विपर्यास इति द्व्यङ्गबलविभागः[४३] । तेन त्र्यङ्गबलविभागो व्याख्यातः[४४] । दण्डसंपत्सारबलं पुंसां हस्त्यश्वयोर्विशेषः[४५] । कुलं जातिः सत्त्वं वयस्थता प्राणो वर्ष्मजवस्तेजः शिल्पं स्थैर्यमुदग्रता विधेयत्वं सुव्यञ्जनाचारतेति पत्त्यश्वरथद्विपानाम्[४६] । सारत्रिभागमुरस्यं स्थापयेत्[४७] । द्वौ त्रिभागौ कक्षं पक्षं चोभयतः अनुलोममनुसारं प्रतिलोमं तृतीयसारं फल्गुप्रतिलोममेवं सर्वमुपयोगं गमयेत्[४८] । फल्गुबलमन्तेष्ववधाय वेगाभिहूलितो भवति[४९] । सारबलमग्रतः कृत्वा कोटीष्वनुसारं कुर्यात्[५०] । जघने तृतीयसारं मध्ये फल्गुबलमेवमेतत्सहिष्णु भवति[५१] । व्यूहं तु स्थापयित्वा पक्षकक्षोरस्यानामेकेन द्वाभ्यां वा प्रहरेत्[५२] । शेषैः प्रतिगृह्णीयात्[५३] । यत्परस्य दुर्बलं वीतं हस्त्यश्वं दूष्यामात्यकृतोपजापं वा तत्प्रभूतसारेणाभिहन्यात्[५४] । यद्वा परस्य सारिष्ठं तद्विगुणसारेणाभिहन्यात्[५५] । यदङ्गमल्पसारमात्मनस्तद्बहुनोपचिनुयात्[५६] । यतः परस्यापचयस्ततो ऽभ्याशे व्यूहेत यतो वा भयं स्यात्[५७] । अभिसृतं परिसृतमतिसृतमपसृतमुन्मथ्यावधानं वलयो गोमूत्रिकामण्डलं प्रकीर्णिका व्यावृत्तपृष्ठमनुवंशमग्रतः पार्श्वाभ्यां पृष्ठतो भग्नरक्षा भग्नानुपात इत्यश्वयुद्धानि[५८] । प्रकीर्णिकावर्जान्येतान्येव चतुर्णामङ्गानां व्यस्तसमस्तानां वा घातः[५९] । पक्षकक्षोरस्यानां च प्रभञ्जनमवस्कन्दः सौप्तिकं चेति हस्तियुद्धानि[६०] । उन्मथ्यावधानवर्जान्येतान्येव स्वभूमावभियानापयानस्थितयुद्धानीति रथयुद्धानि[६१] । सर्वदेशकालप्रहरणमुपांशुदण्डश्चेति पत्तियुद्धानि[६२] ।

एतेन विधिना व्यूहानोजान्युग्मांश्च कारयेत् ।
विभवो यावदङ्गानां चतुर्णां सदृशो भवेत्[63] ॥
द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहः ।
भिन्नसंघातनार्थं तु न युध्येताप्रतिग्रहैः[64] ॥

इति सांग्रामिके दशमे ऽधिकरणे पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः, सारफल्गुबलविभागः, पत्त्यश्वरथहस्तियुद्धानि च पञ्चमो ऽध्यायः ॥५॥ आदितस्त्रयस्त्रिंशच्छतः ॥१३३॥

---

## १५८-१५९ प्रक. दण्डभोगमण्डलासंहतव्यूहनं तस्य प्रतिव्यूहस्थापनं च.

पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभागः[1] । पक्षौ कक्षावुरस्यं प्रतिग्रह इति बार्हस्पत्याः[2] । प्रपक्षकक्षोरस्या उभयोः[3] । दण्डभोगमण्डलासंहताः प्रकृतिव्यूहाः[4] । तत्र तिर्यग्वृत्तिर्दण्डः[5] । समस्तानामन्वावृत्तिर्भोगः[6] । सुतरां सर्वतोवृत्तिः मण्डलः[7] । स्थितानां पृथगनीकवृत्तिरसंहतः[8] । पक्षकक्षोरस्यैः समं वर्तमानो दण्डः[9] । स कक्षातिक्रान्तः प्रदरः[10] । स एव पक्षकक्षाभ्यां प्रतिक्रान्तो दृढकः[11] । स एव निष्क्रान्तः पक्षाभ्यामसह्यः[12] । पक्षाववस्थाप्योरस्यातिक्रान्तः श्येनः[13] । विपर्यये चापं चापकुक्षिः प्रतिष्ठः सुप्रतिष्ठश्च[14] । चापपक्षः सञ्जयः[15] । स एवोरस्यातिक्रान्तो विजयः[16] । स्थूलकर्णपक्षः स्थूलकर्णः[17] । द्विगुणपक्षः स्थूलो विशालविजयस्त्वभिक्रान्तपक्षश्चमूमुखः[18] । विपर्यये झषास्यः[19] । ऊर्ध्वराजिर्दण्डः सूची[20] । द्वौ दण्डौ वलयः[21] । चत्वारो दुर्जय इति दण्डव्यूहाः[22] । पक्षकक्षोरस्यैर्विषमं वर्तमानो भोगः स सर्पसारी गोमूत्रिका वा[23] । स युग्मोरस्यो दण्डपक्षः शकटः[24] । विपर्यये मकरः[25] । हस्त्यश्वरथैर्व्यतिकीर्णः शकटः पारिपतन्तक इति भोगव्यूहाः[26] । पक्षकक्षोरस्यानामेकीभावे मण्डलः[27] । स सर्वतोमुखः सर्वतोभद्रो ऽष्टानीको दुर्जय इति मण्डलव्यूहाः[28] । पक्षकक्षोरस्या-

नामसंहतादसंहतः[२९] । स पञ्चानीकानामाकृतिस्थापनाद्वज्रो गोधा वा[३०] । चतुर्णामुद्यानकः काकपदी वा[३१] । त्रयाणामर्धचन्द्रकः कर्कटकशृङ्गी वेत्यसंहतव्यूहाः[३२] । रथोरस्यो हस्तिकक्षो ऽश्वपृष्ठो ऽरिष्टः[३३] । पत्तयो ऽश्वा रथा हस्तिनश्चानुपृष्ठमचलः[३४] । हस्तिनो ऽश्वा रथः पत्तयश्चानुपृष्ठमप्रतिहतः[३५] । तेषां प्रदरं दृढकेन घातयेत्[३६] । दृढकमसह्येन[३७] । श्येनं चापेन[३८] । प्रतिष्ठं सुप्रतिष्ठेन[३९] । संजयं विजयेन[४०] । स्थूलकर्णं विशालविजयेन[४१] । पारिपतन्तकं सर्वतोभद्रेण[४२] । दुर्जयेन सर्वान्प्रतिव्यूहेत[४३] । पत्त्यश्वरथद्विपानां पूर्वं पूर्वमुत्तरेण घातयेत्[४४] । हीनाङ्गमधिकाङ्गेन चेति[४५] । अङ्गदशकस्यैकः पतिः पदिकः[४६] । पदिकदशकस्यैकः सेनापतिः[४७] । तद्दशकस्यैको नायक इति[४८] । स तूर्यघोषध्वजपताकाभिर्व्यूहाङ्गानां संज्ञाः स्थापयेत्[४९] । अङ्गविभागे संघाते स्थाने गमने व्यावर्तने प्रहरणे च समे व्यूहे देशकालयोमात्सिद्धिः[५०] ।

दण्डैरुपनिषद्योगैस्तीक्ष्णैर्व्यासक्तघातिभिः ।
मायाभिर्दैवसंयोगैः शकटैर्हस्तिभूषणैः[५१] ॥
दूष्यप्रकोपैर्गोयूथैः स्कन्धावारप्रदीपनैः ।
कोटीजघनघातैर्वा दूतव्यञ्जनभेदनैः[५२] ॥
दुर्गं दग्धं हृतं वा ते कोपः कुल्यः समुत्थितः ।
शत्रुराटविको वेति परस्योद्वेगमाचरेत्[५३] ॥
एकं हन्यान्न वा हन्यादिषुः क्षिप्तो धनुष्मता ।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि[५४] ॥

इति सांग्रामिके दशमे ऽधिकरणे दण्डभोगमण्डलासंहतव्यूहनं, तस्य प्रतिव्यूहस्थापनं च षष्ठो ऽध्यायः ॥ ६ ॥ आदितश्चतुस्त्रिंशच्छतः ॥ १३४ ॥

एतावता कौटिलीयस्यार्थशास्त्रस्य सांग्रामिकं दशममधिकरणं समाप्तम् ॥ १० ॥

# ११ अधि. संघवृत्तम्

### १६०—१६१ प्रक. भेदोपादानानि उपांशुदण्डश्च.

संघलाभो दण्डमित्रलाभानामुत्तमः[1] । संघाभिसंहतत्वादधृष्यान्परेषां ताननुगुणान्भुञ्जीत सामदानाभ्याम्[2] । विगुणान्भेददण्डाभ्याम्[3] । कम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः[4] । लिच्छिविकवृजिकमल्लकमद्रककुकुरकुरुपाञ्चालादयो राजशब्दोपजीविनः[5] । सर्वेषामासन्नाः सत्त्रिणः संघानां परस्परन्यङ्गद्वेषवैरकलहस्थानान्युपलभ्य क्रमाभिनीतं भेदमपचारयेयुः[6] । असौ त्वा विजल्पतीति[7] । एवमुभयतोबद्धरोषाणां विद्याशिल्पद्यूतवैहारिकेष्वाचार्यव्यञ्जना बालकलहानुत्पादयेयुः[8] । वेशशौण्डिकेषु वा प्रतिलोमप्रशंसाभिः संघमुख्यमनुष्याणां तीक्ष्णाः कलहानुत्पादयेयुः[9] । कृत्यपक्षोपग्रहेण वा कुमारकान्विशिष्टच्छन्दिकया हीनच्छन्दिकानुत्साहयेयुः[10] । विशिष्टानां चैकपात्रविवाहं हीनेभ्यो वारयेयुः[11] । हीनान्वा विशिष्टैरेकपात्रे विवाहे वा योजयेयुः[12] । अवहीनान्वा तुल्यभावोपगमने कुलतः पौरुषतः स्थानविपर्यासतो वा व्यवहारमवस्थितं वा प्रतिलोमस्थापनेन निशामयेयुः[13] । विवादपदेषु वा द्रव्यपशुमनुष्याभिघातेन रात्रौ तीक्ष्णाः कलहानुत्पादयेयुः[14] । सर्वेषु च कलहस्थानेषु हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य प्रतिपक्षवधे योजयेत्[15] । भिन्नानपवाहयेद्वा[16] । एकदेशे समस्तान्वा निवेश्य भूमौ चैषां पञ्चकुलीं दशकुलीं वा कृष्यायां निवेशयेत्[17] । एकस्थां हि शस्त्रग्रहणसमर्थाः स्युः[18] । समवाये चैषामत्ययं स्थापयेत्[19] । राजशब्दिभिरवरुद्धमवक्षिप्तं वा कुल्यमभिजातं राजपुत्रत्वे स्थापयेत्[20] । कार्तान्तिकादिश्चास्य वर्गो राजलक्षण्यतां संघेषु प्रकाशयेत्[21] । संघमुख्यांश्च धर्मिष्ठानुपजपेत्[22] । स्वधर्मममुष्य राज्ञः पुत्रे भ्रातरि वा प्रतिपद्यध्वमिति[23] ।

प्रतिपन्नेषु कृत्यपक्षोपग्रहार्थमर्थं दण्डं च प्रेषयेत्[24] । विक्रमकाले शौण्डिकव्यञ्जनाः पुत्रदारप्रेतापदेशेन नैषेचनिकमिति मदनरसयुक्तान्मद्यकुम्भाञ्शतशः प्रयच्छेयुः[25] । चैत्यदैवतद्वाररक्षास्थानेषु च सत्त्रिणः समयकर्मनिक्षेपं सहिरण्याभिज्ञानमुद्राणि हिरण्यभाजनानि च प्ररूपयेयुः[26] । दृश्यमानेषु च संघेषु विक्रीताः इत्यावेदयेयुः[27] । अथावस्कन्दं दद्यात्[28] । संघानां वा वाहनहिरण्यकालिके गृहीत्वा संघमुख्याय प्रख्यातं द्रव्यं प्रयच्छेत्[29] । तदेषां याचिते दत्तममुष्मै मुख्यायेति ब्रूयात्[30] । एतेन स्कन्धावाराटवीभेदो व्याख्यातः[31] । संघमुख्यपुत्रमात्मसंभावितं वा सत्त्री ग्राहयेत्[32] । अमुष्य राज्ञः पुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसीति[33] । प्रतिपन्नं राजा कोशदण्डाभ्यामपगृह्य संघेषु विक्रमयेत्[34] । अवाप्तार्थस्तमपि प्रवासयेत्[35] । बन्धकीपोषकाः प्लवकनटनर्तकसौभिका वा प्रणिहिताः स्त्रीभिः परमरूपयौवनाभिः संघमुख्यानुन्मादयेयुः[36] । जातकामानामन्यतमस्य प्रत्ययं कृत्वान्यत्र गमनेन प्रसभहरणेन वा कलहानुत्पादयेयुः[37] । कलहे तीक्ष्णाः कर्म कुर्युः[38] । हतोऽयमित्थं कामुकः इति[38] । विसंवादितं वा मर्षयमाणमभिसृत्य स्त्री ब्रूतात्[39] । असौ मां मुख्यस्त्वयि जातकामां बाधते[40] । तस्मिञ्जीवति नेह स्थास्यामीति घातमस्य प्रयोजयेत्[41] । प्रसह्यापहृता वोपवनान्ते क्रीडागृहे वापहर्तारं रात्रौ तीक्ष्णेन घातयेत्[42] । स्वयं वा रसेन[43] । ततः प्रकाशयेत्[44] । अमुना मे प्रियो हत इति[45] । जातकामं वा सिद्धव्यञ्जनः सांवननिकीभिरौषधीभिः संवास्य रसेनातिसंधायापगच्छेत्[46] । तस्मिन्नपक्रान्ते सत्त्रिणः परप्रयोगमभिशंसेयुः[47] । अस्य विधवा गूढाजीवा योगस्त्रियो वा दायनिक्षेपार्थं विवदमानाः संघमुख्यानुन्मादयेयुरिति[48] । कौशिकस्त्रियो नर्तकी गायना वा प्रतिपन्नान्गूढवेश्मसु रात्रिसमागमप्रविष्टास्तीक्ष्णा हन्युर्बध्वा हरेयुर्वा[49] ।

सत्त्री वा स्त्रीलोलुपं संघमुख्यं प्ररूपयेत्[५०] । अमुष्मिन्ग्रामे दरिद्र-
कुलमपसृतम्[५१] । तस्य स्त्री राजार्हा[५२] । गृहाणैनामिति[५३] । गृहीता-
यामर्धमासानन्तरं सिद्धव्यञ्जनो दूष्यसंघमुख्यं मध्ये प्रक्रोशेत्[५४] ।
असौ मे मुख्यां भार्यां स्नुषां भगिनीं दुहितरं वाधिचरतीति[५५] ।
तं चेत्संघो निगृह्णीयाद्राजैनमुपगृह्य विगुणेषु विक्रमयेत्[५६] । अनि-
गृहीते सिद्धव्यञ्जना रात्रौ तीक्ष्णाः प्रवासयेयुः[५७] । ततस्तद्व्यञ्जनाः
प्रक्रोशेयुः[५८] । असौ ब्रह्महा ब्राह्मणीजारश्चेति[५९] । कार्तान्तिकव्य-
ञ्जनो वा कन्यामन्येन वृतामन्यस्य प्ररूपयेत्[६०] । अमुष्य कन्या
राजपत्नी राजप्रसविनी च भविष्यति[६१] । सर्वस्वेन प्रसह्य वैनां
लभस्वेति[६२] । अलभ्यमानायां परपक्षमुद्धर्षयेत्[६३] । लब्धायां सिद्धः
कलहः[६४] । भिक्षुकी वा प्रियभार्यं मुख्यं ब्रूयात्[६५] । असौ ते मुख्यो
यौवनोत्सिक्तो भार्यायां मां प्राहिणोत्[६६] । तस्याहं भयाल्लेख्यमाभ-
रणं गतास्मि[६७] । निर्दोषा ते भार्या[६८] । गूढमस्मिन्प्रतिकर्तव्यमह-
मपि तावत्प्रतिपत्स्यामीति[६९] । एवमादिषु कलहस्थानेषु स्वयमुत्पन्ने
वा कलहे तीक्ष्णैरुत्पादिते वा हीनपक्षं राजा कोशदण्डाभ्या-
मुपगृह्य विगुणेषु विक्रमयेदपवाहयेद्वा[७०] । संघेष्वेवमेकराजो वर्तेत[७१] ।
संघाश्चाप्येवमेकराजात्तेभ्यो ऽतिसंधानेभ्यो रक्षेयुः[७२] ।

संघमुख्यश्च संघेषु न्यायवृत्तिर्हितः प्रियः ।
दान्तो युक्तजनस्तिष्ठेत्सर्वचित्तानुवर्तकः[७३] ॥

इति संघवृत्ते एकादशे ऽधिकरणे भेदोपादानानि, उपांशुदण्डश्च प्रथमो ऽध्यायः ॥१॥
आदितः पञ्चत्रिंशच्छतः ॥१३५॥ एतावता कौटिलीयस्यार्थशास्त्रस्य
संघवृत्तमेकादशमधिकरणं समाप्तम् ॥११॥

---

## १२ अधि. आबलीयसम्.

### १६२. प्रक. दूतकर्माणि.

बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्मा तिष्ठेत्[१] ।
इन्द्रस्य हि स प्रणमति यो बलीयसो नमतीति भारद्वाजः[२] ।

सर्वसंदोहेन बलानां युध्येत[3] । पराक्रमो हि व्यसनमपहन्ति[4] । स्वधर्मश्चैष क्षत्रियस्य[5] । युद्धे जयः पराजयो वेति विशालाक्षः[6] । नेति कौटिल्यः[7] । सर्वत्रानुप्रणतः कुलैडक इव निराशो जीविते वसति[8] । युध्यमानश्चाल्पसैन्यः समुद्रमिवाप्लवो ऽवगाहमानः सीदति[9] । तद्विशिष्टं तु राजानमाश्रितो दुर्गमविषह्यं वा चेष्टेत[10] । त्रयो ऽभियोक्तारो धर्मासुरलोभविजयिन इति[11] । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति[12] । तमभ्यवपद्येत[13] । परेषामपि भयाद्भूमिद्रव्यहरणेन लोभविजयी तुष्यति[14] । तमर्थेनाभ्यवपद्येत[15] । भूमिद्रव्य पुत्रदारप्राणहरणेनासुरविजयी तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत[16] । तेषामन्यतममुत्तिष्ठमानं संधिना मन्त्रयुद्धेन कूटयुद्धेन वा प्रतिव्यूहेत[17] । शत्रुपक्षस्य सामदानाभ्याम्[18] । स्वपक्षं भेददण्डाभ्याम्[19] । दुर्गं राष्ट्रं स्कन्धावारं वास्य गूढाः शस्त्ररसाग्निभिः साधयेयुः[20] । सर्वतः पार्ष्णिमस्य ग्राहयेत्[21] । अटवीभिर्वा राज्यं घातयेत्[22] । तत्कुलीनावरुद्धाभ्यां वा हारयेत्[23] । अपकारान्तेषु चास्य दूतं प्रेषयेत्[24] । अनपकृत्य वा संधानम्[25] । तथाप्यभिप्रयान्तं कोशदण्डयोः पादोत्तरमहोरात्रोत्तरं वा संधिं याचेत[26] । स चेद्दण्डसंधिं याचेत कुण्ठमस्मै हस्त्यश्वं दद्यादुत्साहितं वा गरयुक्तम्[27] । पुरुषसंधिं याचेत दूष्यामित्राटवीबलमस्मै दद्याद्योगपुरुषाधिष्ठितम्[28] । तथा कुर्याद्यथोभयविनाशः स्यात्[29] । तीक्ष्णबलं वास्मै दद्यात्[30] । अवमानितं विकुर्वीत मौलमनुरक्तं वा यदस्य व्यसने ऽपकुर्यात्[31] । कोशसंधिं याचेत सारमस्मै दद्याद्यस्य क्रेतारं नाधिगच्छेत्[32] । कुप्यमयुद्धयोग्यं वा[33] । भूमिसंधिं याचेत प्रत्यादेयां नित्यामित्रामनपाश्रयां महाक्षयव्ययनिवेशां वास्मै भूमिं दद्यात्[34] । सर्वस्वेन वा राजधानीवर्जेन संधिं याचेत[35] । बलीयसः

यत्प्रसह्य हरेदन्यः तत्प्रयच्छेदुपायतः ।
रक्षेत्स्वदेहं न धनं का ह्यनित्ये धने दया[36] ॥

इत्याबलीयसे द्वादशे ऽधिकरणे दूतकर्माणि संधियाचनं
प्रथमो ऽध्यायः ॥१॥ आदितः षट्त्रिंशच्छतः ॥१३६॥

## १६३ प्रक. मन्त्रयुद्धम्.

स चेत्संधौ नावतिष्ठेत ब्रूयादेनम्[१]। इमे शत्रुषड्वर्गवशगा राजानो विनष्टाः[२]। तेषामनात्मवतां नार्हसि मार्गमनुगन्तुम्[३]। धर्ममर्थं चावेक्षस्व[४]। मित्रमुख्या ह्यमित्रास्ते ये त्वा साहसमधर्ममर्थातिक्रमं च ग्राहयन्ति[५]। शूरैस्त्यक्तात्मभिः सह योद्धुं साहसम्[६]। जनक्षयमुभयतः कर्तुमधर्मः[७]। दृष्टमर्थं मित्रमदुष्टं च त्यक्तुमर्थातिक्रमः[८]। मित्रवांश्च स राजा[९]। भूयश्चैतेनार्थेन मित्राण्युद्योजयिष्यति यानि त्वा सर्वतो ऽभियास्यन्ति[१०]। न च मध्यमोदासीनयोर्मण्डलस्य वा परित्यक्तः[११]। भवांस्तु परित्यक्तो ये त्वा समुद्युक्तमुपप्रेक्षन्ते[१२]। भूयः क्षयव्ययाभ्यां युज्यताम्[१३]। मित्राच्च भिद्यताम्[१४]। अथैनं परित्यक्तमूलं सुखेनोच्छेत्स्यामह इति[१५]। स भवान्नार्हति मित्रमुखानाममित्राणां श्रोतुं मित्राण्युद्वेजयितुममित्रांश्च श्रेयसा योक्तुं प्राणसंशयमनर्थं चोपगन्तुमिति यच्छेत्[१६]। तथापि प्रतिष्ठमानस्य प्रकृतिकोपमस्य कारयेद्यथासंघवृत्ते व्याख्यातं योगवामने च[१७]। तीक्ष्णरसदप्रयोगं च यदुक्तमात्मरक्षितके रक्ष्यं तत्र तीक्ष्णात्रसदांश्च प्रयुञ्जीत[१८]। बन्धकीपोषकाः परमरूपयौवनाभिः स्त्रीभिः सेनामुख्यानुन्मादयेयुः[१९]। बहूनामेकस्य द्वयोर्वा मुख्ययोः कामे जाते तीक्ष्णाः कलहानुत्पादयेयुः[२०]। कलहे पराजितपक्षं परत्रापगमने यात्रासाहाय्यदाने वा भर्तुर्योजयेयुः[२१]। कामवशाद्वा सिद्धव्यञ्जनाः सांवननिकीभिरोषधीभिरभिसंधानाय मुख्येषु रसं दापयेयुः[२२]। वैदेहकव्यञ्जनो वा राजमहिष्याः सुभगायाः प्रेष्यामासन्नां कामनिमित्तमर्थेनाभिवृष्य परित्यजेत्[२३]। तस्यैव परिचारकव्यञ्जनोपदिष्टःसिद्धव्यञ्जनः सांवननिकीमौषधीं दद्याद्वैदेहकशरीरे ऽवधातव्येति[२४]। सिद्धे सुभगाया अप्येनं योगमुपदिशेद्राजशरीरे ऽवधातव्येति[२५]। ततो रसेनातिसंदध्यात्[२६]। कार्तान्तिकव्यञ्जनो वा महामात्रं राज-

लक्षणसंपन्नं कमाभिनीतं ब्रूयात्[27] । भार्यामस्य भिक्षुकी[28] । राजपत्नी राजप्रसविनी वा भविष्यसीति[29] । भार्याव्यञ्जनो वा महामात्रं ब्रूयात्[30] । राजा किल मामवरोधयिष्यति[31] । तवान्तिकाय पत्त्रलेख्यमाभरणं चेदं परिव्राजकयाहृतमिति[32] । सूदारालिकव्यञ्जनो वा रसप्रयोगार्थं राजवचनादर्थं चास्य लोभनीयमभिनयेत्[33] । तदस्य वैदेहकव्यञ्जनः प्रतिसंदध्यात्[34] । कार्यसिद्धिं च ब्रूयात्[35] । एवमेकेन द्वाभ्यां त्रिभिरित्युपायैरेकैकस्य महामात्रं विक्रमायापगमनाय वा योजयेदिति[36] । दुर्गेषु चास्य शून्यपालासन्नाः सत्त्रिणः पौरजानपदेषु मैत्रीनिमित्तमावेदयेयुः[37] । शून्यपालेनोक्ता योधाश्चाधिकरणस्थाश्च[38] । कृच्छ्रगतो राजा जीवन्नागमिष्यति[39] । न वा प्रसह्य वित्तमार्जयध्वममित्रांश्च हत इति[40] । बहुलीभूते तीक्ष्णाः पौरान्निशास्वाहारयेयुर्मुख्यांश्चाभिहन्युः[41] । एवं क्रियन्ते ये शून्यपालस्य न शुश्रूषन्त इति[42] । शून्यपालस्थानेषु च सशोणितानि शस्त्रवित्तबन्धनान्युत्सृजेयुः[43] । ततः सत्त्रिणः शून्यपालो घातयति विलोपयति चेत्यावेदयेयुः[44] । एवं जानपदान्समाहर्तुर्भेदयेयुः[45] । समाहर्तृपुरुषांस्तु ग्राममध्येषु रात्रौ तीक्ष्णा हत्वा ब्रूयुः[46] । एवं क्रियन्ते ये जनपदमधर्मेण बाधन्त इति[47] । समुत्पन्ने दोषे शून्यपालं समाहर्तारं वा प्रकृतिकोपेन घातयेयुः[48] । तत्कुलीनमवरुद्धं वा प्रतिपादयेयुः[49] ॥

अन्तःपुरपुरद्वारं द्रव्यधान्यपरिग्रहान् ।
दहेयुस्तांश्च हन्युर्वा ब्रूयुरस्यार्तवादिनः[50] ॥

इत्याबलीयसे द्वादशेऽधिकरणे दूतकर्माणि वाक्ययुद्धं मन्त्रयुद्धं द्वितीयोऽध्यायः ॥ २ ॥ आदितः सप्तत्रिंशच्छतः ॥ १३७ ॥

---

**१६४-१६५ प्रक. सेनामुख्यवधः मण्डलप्रोत्साहनं च**

राज्ञो राजवल्लभानां चासन्नाः सत्त्रिणः पत्त्यश्वरथद्विपमुख्यानां राजा क्रुद्ध इति सुहृद्विश्वासेन मित्रस्थानीयेषु कथयेयुः ।

बहुलीभूते तीक्ष्णाः कृतरात्रिचारप्रतीकारा गृहस्वामिवचनेनागम्यतामिति ब्रूयुः[२] । तान्निर्गच्छत एवाभिहन्युः[३] । स्वामिसंदेश इति चासन्ना ब्रूयुः[४] । ये च प्रवासितास्तान्सत्त्रिणो ब्रूयुः[५] । एतत्तद्यदस्माभिः कथितं जीवितुकामेनापक्रान्तव्यमिति[६] । येभ्यश्च राजा याचितो न ददाति तान्सत्त्रिणो ब्रूयुः[७] । उक्तः शून्यपालो राज्ञा[८] । याच्यमर्थमसौ चासौ मा याचते[९] । मया प्रत्याख्याताः शत्रुसंहिताः[१०] । तेषामुद्धरणे प्रयतस्वेति[११] । ततः पूर्ववदाचरेत्[१२] । येभ्यश्च राजा याचितो ददाति तान्सत्त्रिणो ब्रूयुः[१३] । उक्तः शून्यपालो राज्ञा[१४] । याच्यमर्थमसौ चासौ च मा याचते[१५] । तेभ्यो मया सो ऽर्थो विश्वासार्थं दत्तः[१६] । शत्रुसंहितास्तेषामुद्धरणे प्रयतस्वेति[१७] । ततः पूर्ववदाचरेत्[१८] । ये चैनं याच्यमर्थं न याचन्ते तान्सत्त्रिणो ब्रूयुः[१९] । उक्तः शून्यपालो राज्ञा[२०] । याच्यमर्थमसौ चासौ च मा न याचते[२१] । किमन्यत्[२२] । स्वदोषशङ्कितत्वात्[२३] । तेषामुद्धरणे प्रयतस्वेति[२४] । ततः पूर्ववदाचरेत्[२५] । एतेन सर्वः कृत्यपक्षो व्याख्यातः[२६] । प्रत्यासन्नो वा राजानं सत्त्री ग्राहयेत्[२७] । असौ चासौ च ते महामात्रः शत्रुपुरुषैः संभाष्यत इति[२८] । प्रतिपन्ने दूष्यानस्य शासनहरान्दर्शयेत्[२९] । एतत्तदिति[३०] । सेनामुख्यप्रकृतिपुरुषान्वा भूम्या हिरण्येन वा लोभयित्वा स्वेषु विक्रमयेदपवाहयेद्वा[३१] । यो ऽस्य पुत्रः समीपे दुर्गे वा प्रतिवसति तं सत्त्रिणोपजापयेत्[३२] । आत्मसंपन्नतरस्त्वं पुत्रः तथाप्यन्तर्हितः[३३] । तत्किमुपेक्षसे[३४] । विक्रम्य गृहाण[३५] । पुरा त्वा युवराजो विनाशयतीति[३६] । तत्कुलीनमवरुद्धं वा हिरण्येन प्रतिलोभ्य ब्रूयात्[३७] । अन्तर्बलं प्रत्यन्तस्कन्धमन्तं वास्य प्रमृद्नीहीति[३८] । आटविकानर्थमानाभ्यामुपगृह्य राज्यमस्य घातयेत्[३९] । पार्ष्णिग्राहं वास्य ब्रूयात्[४०] । अहं वः सेतुः[४१] । मयि विभिन्ने सर्वानेष प्लवो राजा प्लावयिष्यतीति[४२] । संभूय वास्य यात्रां विहनाम इति[४३] । तत्संहतानामसंहतानां च प्रेषयेत्[४४] । एष खलु राजा

मामुत्पाट्य भवत्सु कर्म करिष्यति[45] । बुध्यध्वम्[46] । अहं वः श्रेयानभ्यवपत्तामिति[47] ।

मध्यमस्य प्रहिणुयादुदासीनस्य वा पुनः ।
यथासन्नस्य मोक्षार्थं सर्वस्वेन तदर्पणम्[48] ।

इत्याबलीयसे द्वादशेऽधिकरणे सेनामुख्यवधः मण्डलप्रोत्साहनं च तृतीयोऽध्यायः ॥ ३ ॥ आदितोऽष्टत्रिंशच्छतः ॥ १३८ ॥

---

### १६६—१६७ प्रक. शस्त्राग्निरसप्रणिधयः वीवधासारप्रसारवधश्च.

ये चास्य दुर्गेषु वैदेहकव्यञ्जना ग्रामेषु गृहपतिकव्यञ्जना जनपदसंधिषु गोरक्षकतापसव्यञ्जनास्ते सामन्ताटविकतत्कुलीनावरुद्धानां पण्यागारपूर्वं प्रेषयेयुः । अयं देशो हार्य इति[2] । आगतांश्चैषां दुर्गे गूढपुरुषानर्थमानाभ्यामभिसत्कृत्य प्रकृतिच्छिद्राणि प्रदर्शयेयुः[3] । तेषु तैः सह प्रहरेयुः । स्कन्धावारे वास्य शौण्डिकव्यञ्जनः पुत्रमभियुक्तं स्थापयित्वावस्कन्दकाले रसेन प्रवासयित्वा नैषेचनिकमिति मदनरसयुक्तान्मद्यकुम्भाञ्छतशः प्रयच्छेत्[5] । शुद्धं वा मद्यं माद्यं वा मद्यं दद्यादेकमहः । उत्तरं रससिद्धं प्रयच्छेत्[6] । शुद्धं वा मद्यं दण्डमुख्येभ्यः प्रदाय मदकाले रससिद्धं प्रयच्छेत्[7] । दण्डमुख्यव्यञ्जनो वा पुत्रमभित्यक्तमिति ममानम्[8] । पक्वमांसिकौदनिकशौण्डिकापूपिकव्यञ्जना वा पण्यविशेषमवघोषयित्वा परस्परसंघर्षेण कालिकंसमर्घतरमिति वा परानाहूय रसेन स्वपण्यान्यपचारयेयुः[10] । सुराक्षीरदधिसर्पिस्तैलानि वा तद्व्यवहर्तृषु गृहीत्वा स्त्रियो बालाश्च रसयुक्तेषु स्वभाजनेषु परिकिरेयुः[11] । अनेनार्घेण विशिष्टं वा भूयो दीयतामिति तत्रैवावकिरेयुः[12] । एतान्येव वैदेहकव्यञ्जनाः पण्यविक्रयेणाहर्तारो वा हस्त्यश्वानां विधायवसेषु रसमासन्ना दद्युः[13] । कर्मकरव्यञ्जना वा रसाक्तं यवसमुदकं वा विक्रीणीरन्[14] । चिरसं-

सृष्टा वा गोवाणिजका गवामजावीनां वा यूथान्यवस्कन्दकालेषु परेषां मोहस्थानेषु प्रमुञ्चेयुः[१५] । अश्वखरोष्ट्रमाहिषादीनां दुष्टांश्च तद्व्यञ्जना वा चुचुन्दरीशोणिताक्ताक्षान्[१६] । लुब्धकव्यञ्जना वा व्यालमृगान्पञ्जरेभ्यः प्रमुञ्चेयुः[१७] । सर्पग्राहा वा सर्पानुग्रविषान्[१८] । हस्तिजीविनो वा हस्तिनः[१९] । अग्निजीविनो वाग्निमवसृजेयुः[२०] । गूढपुरुषा वा विमुखान्पत्त्यश्वरथद्विपमुख्यानभिहन्युः[२१] । आदीपयेयुर्वा मुख्यावासान्[२२] । दूष्यामित्राटविकव्यञ्जनाः प्रणिहिताः पृष्ठाभिघातमवस्कन्दप्रतिग्रहं वा कुर्युः[२३] । वनगूढा वा प्रत्यन्तस्कन्धमुपनिष्कृष्याभिहन्युः[२४] । एकायने वीवधासारप्रसारान्वा ससङ्केतं वा रात्रियुद्धे भूरितूर्यमाहत्य ब्रूयुः[२५] । अनुप्रविष्टाः स्मो लब्धं राज्यमिति[२६] । राजावासमनुप्रविष्टा वा संकुलेषु राजानं हन्युः[२७] । सर्वतो वा प्रयातमेनं म्लेच्छाटविकदण्डचारिणः सत्त्रापाश्रयस्तम्भवाटापाश्रया वा हन्युः[२८] । लुब्धकव्यञ्जना वावस्कन्दसंकुलेषु गूढयुद्धहेतुभिरभिहन्युः[२९] । एकायने वा शैलस्तम्भपटखञ्जनान्तरुदके वा स्वभूमिबलेनाभिहन्युः[३०] । नदीसरस्तटाकसेतुबन्धभेदवेगेन वा प्लावयेयुः[३१] । धान्वनवनदुर्गनिम्नदुर्गस्थं वा योगाग्निधूमाभ्यां नाशयेयुः[३२] । सङ्कटगतमग्निना धान्वनगतं धूमेन निधानगतं रसेन तोयावगाढं दुष्टग्राहैरुदकचरणैर्वा तीक्ष्णाः साधयेयुः[३३] । आदीप्तावासान्निष्पतन्तं वा[३४] ।

योगवामनयोगाभ्यां योगेनान्यतमेन वा ।
अमित्रमतिसंदध्यात्सक्तमुक्तासु भूमिषु[३५] ॥

इत्याबलीयसे द्वादशे ऽधिकरणे शस्त्राग्निरसप्रणिधयः वीवधासारप्रसारवधश्च चतुर्थो ऽध्यायः ॥४॥ आदित एकोनचत्वारिंशच्छतः ॥१३९॥

---

**१६८-१७० प्रक. योगातिसंधानं दण्डातिसंधानम् एकविजयश्च.**

दैवतेज्यायां यात्रायाममित्रस्य बहूनि पूज्यागमस्थानानि भक्तितस्तत्रास्य योगमुञ्जयेत् । देवतागृहप्रविष्टस्योपरि यन्त्रमो-

न्त्रेण गूढभित्तिं शिलां वा पातयेत्[1] । शिलाशस्त्रवर्ष[2]मुत्तमा-
गारात्[3] । कवाटमवपातितं वा भित्तिप्रणिहितमेकदेशबन्धं वा
परिघं मोक्षयेत्[4] । देवतादेहध्वजप्रहरणानि वास्योपरिष्टात्पा-
तयेत्[5] । स्थानासनगमनभूमिषु वास्य गोमयप्रदेहेन गन्धोदकप्र-
सेकेन वा रसमतिचारयेत्[6] । पुष्पचूर्णोपहारेण वा गन्धप्रति-
च्छिन्नं वास्य तीक्ष्णं धूममतिनयेत्[7] । शूलकूपमवपातनं वा शय-
नासनस्याधस्ताद्यन्त्रबद्धतलमेनं कीलमोक्षणेन प्रवेशयेत्[8] ।
प्रत्यासन्ने वाटव्यमित्रे जनपदाच्चानवरोधक्षममतिनयेत्[9] । दुर्गा-
च्चानवरोधक्षममपनयेत्[10] । प्रत्यादेयमरिविषयं वा प्रेषयेत्[11] । जन-
पदं चैकस्थं शैलवननदीदुर्गेष्वटवीव्यवहितेषु वा पुत्रभ्रातृपरि-
गृहीतं स्थापयेत्[12] । उपरोधहेतवो दण्डोपनतवृत्ते व्याख्याताः[13] ।
तृणकाष्ठमायोजनाद्दाहयेत्[14] । उदकानि च दूषयेत्[15] । अवस्राव-
येच्च[16] । कूटकूपावपातकण्टकिनीश्च बहिरुब्जयेत्[17] । सुरङ्गाममित्र-
स्थाने बहुमुखीं कृत्वा निचयमुख्यानभिहारयेत्[18] । अमित्रं वा[19] ।
परप्रयुक्तायां वा सुरङ्गायां परिखामुदकान्तिकीं खानयेत्[20] । कूप-
शालामनुसालं वातोयकुम्भान्कांस्यभाण्डानि वा शङ्कास्थानेषु
स्थापयेत्खाताभिज्ञानार्थम्[21] । ज्ञाते सुरङ्गापथे प्रतिसुरङ्गां कारयेत्[22] ।
मध्ये भित्वा धूममुदकं वा प्रयच्छेत्[23] । प्रतिविहितदुर्गो वा मूले
दायादं कृत्वा प्रतिलोमामस्य दिशं गच्छेत्[24] । यतो वा मित्रबन्धु-
भिराटविकैर्वा संसृज्येत[25] । परस्यामित्रैर्दूष्यैर्वा महद्भिः[26] । यतो वा
गतोऽस्य मित्रैर्वियोगं कुर्यात्[27] । पार्ष्णिं वा गृह्णीयात्[28] । राज्यं
वास्य हारयेत्[29] । वीवधासारप्रसारान्वा वारयेत्[30] । यतो वा शक्नु-
यादाक्षिकपादपक्षेपेणास्य प्रहर्तुम्[31] । यतो वा स्वं राज्यं त्रायेत
मूलस्योपचयं वा कुर्यात्[32] । यतः संधिमभिप्रेतं लभेत ततो वा
गच्छेत्[33] । सहप्रस्थायिनो वास्य प्रेषयेयुः[34] । अयं ते शत्रुरस्माकं
हस्तगतः[35] । पण्यं विप्रकारं वापदिश्य हिरण्यमन्तःसारबलं च

प्रेषयस्व यस्यैनमर्पयेम बद्धं प्रवासितं वेति[३६]। प्रतिपन्ने हिरण्यं सारबलं चाददीत[३७]। अन्तपालो वा दुर्गसंप्रदानेन बलैकदेशमतिनीय विश्वस्तं घातयेत्[३८]। जनपदमेकस्थं वा घातयितुममित्रानीकमावाहयेत्[३९]। तदवरुद्धदेशमतिनीय विश्वस्तं घातयेत्[४०]। मित्रव्यञ्जनो वा बाह्यस्य प्रेषयेत्[४१]। क्षीणमस्मिन्दुर्गे धान्यं स्नेहाः क्षारो लवणं वा[४२]। तदमुष्मिन्देशे काले च प्रवेक्ष्यति[४३]। तदुपगृहाणेति[४४]। ततो रसविद्धधान्यस्नेहं क्षारं लवणं वा दूष्यामित्राटविकाः प्रवेशयेयुः[४५]। अन्ये चाभित्यक्ताः[४६]। तेन सर्वभाण्डवीवधग्रहणं व्याख्यातम्[४७]। संधिं वा कृत्वा हिरण्यैकदेशमस्मै दद्यात्[४८]। विलम्बमानः शेषम्[४९]। ततो रक्षाविधानान्यवस्रावयेत्[५०]। अग्निरसशस्त्रैर्वा प्रहरेत्[५१]। हिरण्यप्रतिग्राहिणो वास्य वल्लभाननुगृह्णीयात्[५२]। परिक्षीणो वास्मै दुर्गं दत्त्वा निर्गच्छेत्[५३]। सुरुङ्गया कुक्षिप्रदरेण वा प्राकारभेदेन निर्गच्छेत्[५४]। रात्राववस्कन्दं दत्त्वा सिद्धस्तिष्ठेत्[५५]। असिद्धः पार्श्वेनापगच्छेत्[५६]। पाषण्डच्छद्मना मन्दपरिवारो निर्गच्छेत्[५७]। प्रेतव्यञ्जनो वा गूढैर्निर्ह्रियेत[५८]। स्त्रीवेषधारी वा प्रेतमनुगच्छेत्[५९]। दैवतोपहारश्राद्धप्रहवणेषु वा रसविद्धमन्नपानमवसृज्य कृतोपजापो दूष्यव्यञ्जनैर्निष्पत्य गूढसैन्यो ऽभिहन्यात्[६०]। एवं गृहीतदुर्गो वा प्राश्य प्राशं चैत्यमुपस्थाप्य दैवतप्रतिमाच्छिद्रं प्रविश्यासीत[६१]। गूढभित्तिं वा दैवतप्रतिमायुक्तं वा भूमिगृहम्[६२]। विस्मृते सुरुङ्गया रात्रौ राजावासमनुप्रविश्य सुप्तममित्रं हन्यात्[६३]। यन्त्रविश्लेषणं वा विश्लेष्याधस्तादवपातयेत्[६४]। रसाग्नियोगेनावलिप्तं गृहं जतुगृहं वाधिशयानमामित्रमादीपयेत्[६५]। प्रमदवनविहाराणामन्यतमे वा विहारस्थाने प्रमत्तं भूमिगृहसुरुङ्गागूढभित्तिप्रविष्टास्तीक्ष्णा हन्युः[६६]। गूढप्रणिहिता वा रसेन स्वपतो वा निरुद्धे देशे गूढाः स्त्रियः सर्परसाग्निधूमानुपरि मुञ्चेयुः[६७]। प्रत्युत्पन्ने वा कारणे यद्यदुपपद्येत तत्तदमित्रे ऽन्तःपुरगते गूढसंचारः प्रयुञ्जीत[६८]।

ततो गूढमेवापगच्छेत्[९९] । स्वजनसंज्ञां च प्ररूपयेत्[१००] ।
द्वाःस्थान्वर्षवरांश्चान्यान्निगूढोपहितान्परैः ।
तूर्यसंज्ञाभिराहूय द्विषच्छेषाणि कारयेत्[१०१] ॥

इत्यावलीयसे द्वादशे ऽधिकरणे योगातिसंधानं दण्डातिसंधानं एकविजयश्च पञ्चमो ऽध्यायः ॥ ५ ॥ आदितश्चत्वारिंशच्छतः ॥ १४० ॥ ऐतावता कौटिलीयस्यार्थशास्त्रस्य आवलीयसं द्वादशमधिकरणं समाप्तम् ॥ १२ ॥

---

# १३ अधि. दुर्गलम्भोपायः.

## १७१ प्रक. उपजापः.

विजिगीषुः परग्राममवाप्तुकामः सर्वज्ञदैवतसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत्[१] । परपक्षं चोद्वेजयेत्[२] । सर्वज्ञख्यापनं तु[३] । गृहगुह्यप्रवृत्तिज्ञानेन प्रत्यादेशो मुख्यानाम्[४] । कण्टकशोधनापसर्पागमेन प्रकाशनं राजद्विष्टकारिणाम्[५] । विज्ञाप्योपायनख्यापनमदृष्टसंसर्गविद्यासंज्ञादिभिः[६] । विदेशप्रवृत्तिज्ञानं तदहरेव गृहकपोतेन मुद्रासंयुक्तेन[७] । दैवतसंयोगख्यापनं तु[८] । सुरङ्गामुखेनाग्निचैत्यदैवतप्रतिमाच्छिद्रानुप्रविष्टैरग्निचैत्यदैवतव्यञ्जनैः संभाषणं पूजनं च[९] । उदकादुत्थितैर्वा नागहरिणव्यञ्जनैः संभाषणं पूजनं च[१०] । रात्रावन्तरुदके समुद्रवालुकाकोशं प्रणिधायाग्निमालादर्शनम्[११] । शिलाशिक्यावगृहीते प्लवके स्थानम्[१२] । उदकवास्तिना जरायुणा वा शिरो ऽवगूढनासः पृषतान्त्रकुलीरनक्रशिशुमारोद्रवसाभिर्वा शतपाक्यं तैलं नस्तः प्रयोगः[१३] । तेन रात्रिगणश्चरतीत्युदकचरणानि[१४] । तैर्वरुणनागकन्यावाक्यक्रिया संभाषणं च[१५] । कोपस्थानेषु मुखादग्निधूमोत्सर्गः[१६] । तदस्य स्वविषये कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकक्षणिकगूढपुरुषसाचिव्यकरास्तद्दर्शिनश्च प्रकाशयेयुः[१७] । परस्य विषये दैवतदर्शनं दिव्यकोशदण्डोत्पत्तिं चास्य ब्रूयुः[१८] । दैवतप्रश्ननिमित्ता वायसाङ्गविद्याः स्वप्नमृगपक्षिव्याहारेषु चास्य

विजयं ब्रूयुः[१९] । विपरीतममित्रस्य[२०] । सदुन्दुभिमुल्कां च परस्य नक्षत्रे दर्शयेयुः[२१] । परस्य मुख्यान्मित्रत्वेनोपदिशन्तो दूतव्यञ्जनाः स्वामिसत्कारं ब्रूयुः[२२] । स्वपक्षबलाधानं परपक्षप्रतिघातं च तुल्ययोगक्षेममात्यानामायुधीयानां च कथयेयुः[२३] । तेषु व्यसनाभ्युदयापेक्षणमपत्यपूजनं च प्रयुञ्जीत[२४] । तेन परपक्षमुत्साहयेद्यथोक्तं पुरस्तात्[२५] । भूयश्च वक्ष्यामः[२६] । साधारणगर्दभेन दक्षान्[२७] । लकुटशाखाहननाभ्यां दण्डचारिणः[२८] । कूलैलकेन चोद्विग्नान्[२९] । अशनिवर्षेण विमानितान्[३०] । विदुलेनावकेशिना वायसपिण्डेन कैतवजमेघेनेति विहताशान्[३१] । दुर्भगालंकारेण द्वेषिणा पतिपूजाफलान्[३२] । व्याघ्रचर्मणा मृत्युकूटेन चोपहितान्[३३] । पीलुविखादनेन करकयोष्ट्र्या गर्दभीक्षीराभिमन्थनेनेति ध्रुवापकारिण इति[३४] । प्रतिपन्नानर्थमानाभ्यां योजयेत्[३५] । द्रव्यभक्तच्छिद्रेषु चैनान्द्रव्यभक्तादानैरनुगृह्णीयात्[३६] । अप्रतिगृह्णतां स्त्रीकुमारलंकारानभिहरेयुः[३७] । दुर्भिक्षस्तेनाटव्युपघातेषु च पौरजानपदानुत्साहयन्तः सत्त्रिणो ब्रूयुः[३८] । राजानमनुग्रहं याचामहे[३९] । निरनुग्रहाः परत्र गच्छाम इति[४०] ।

तथेति प्रतिपन्नेषु द्रव्यधान्यपरिग्रहैः ।
साचिव्यं कार्यमित्येतदुपजापाद्भुतं महत्[४१] ॥

इति दुर्गलम्भोपाये त्रयोदशे ऽधिकरणे उपजापः प्रथमो ऽध्यायः ॥ १ ॥
आदित एकचत्वारिंशच्छतः ॥ १४१ ॥

## १७२. प्रक. योगवामनम्.

मुण्डो जटिलो वा पर्वतगुहावसी चतुर्वर्षशतायुर्ब्रुवाणः प्रभूतजटिलान्तेवासी नगराभ्याशे तिष्ठेत्[१] । शिष्याश्चास्य मूलफलोपगमनैरमात्यान्राजानं च भगवद्दर्शनाय योजयेयुः[२] । समागतश्च राज्ञा पूर्वराजदेशाभिज्ञानानि कथयेत्[३] । शते शते च वर्षाणां पूर्णे ऽहमग्निं प्रविश्य पुनर्बालो भवामि[४] । तदिह

भवत्समीपे चतुर्थमग्निं प्रवेक्ष्यामि[५]। अवश्यं मे भवानानयितव्यः[६]। त्रीन्वरान्वृणीष्वेति[७]। प्रतिपन्नं ब्रूयात्[८]। सप्तरात्रमिह सपुत्रदारेण प्रेक्षाप्रहवणपूर्वं वस्तव्यमिति[९]। वसन्तमवस्कन्देत्[१०]। मुण्डो वा जटिलो वा स्थानिकव्यञ्जनः प्रभूतजटिलान्तेवासी वस्त्रशोणित-दिग्धां वेणुशलाकां सुवर्णचूर्णेनावलिप्य वल्मीके निदध्यात्[११]। उपजिह्विकानुसरणार्थं स्वर्णनालिकां वा[१२]। ततः सत्री राज्ञः कथयेत्[१३]। असौ सिद्धः पुष्पितं निधिं जानातीति[१४]। स राज्ञा पृष्टस्तथेति ब्रूयात्[१५]। तच्चाभिज्ञानं दर्शयेत्[१६]। भूयो वा हिरण्य-मन्तराधाय ब्रूयाच्चैनम्[१७]। नागरक्षितोऽयं निधिः प्रणिपातसाध्य इति[१८]। प्रतिपन्नं ब्रूयात्[१९]। सप्तरात्रमिति समानम्[२०]। स्थानिक-व्यञ्जनं वा रात्रौ तेजनाग्नियुक्तमेकान्ते तिष्ठन्तं सत्रिणः क्रमा-भिनीतं राज्ञः कथयेयुः[२१]। असौ सिद्धः सामेधिक इति[२२]। तं राजा यमर्थं याचेत तमस्य करिष्यमाणः सप्तरात्रमिति समानम्[२३]। सिद्धव्यञ्जनो वा राजानं जम्भकविद्याभिः प्रलोभयेत्[२४]। तं राजेति समानम्[२५]। सिद्धव्यञ्जनो वा देशदेवतामभ्यर्हितामाश्रित्य प्रहव-णैरभीक्ष्णं प्रकृतिमुख्यानाभिसंवास्य क्रमेण राजानमतिसंदध्यात्[२६]। जटिलव्यञ्जनमन्तरुदकवासिनं वा सर्पचैत्यसुरङ्गाभूमिगृहाप-सरणं वरुणं नागराजं वा सत्रिणः क्रमाभिनीतं राज्ञः कथयेयुः[२७]। तं राजेति समानम्[२८]। जनपदान्तवासी सिद्धव्यञ्जनो वा राजानं शत्रुदर्शनाय योजयेत्[२९]। प्रतिपन्नं बिम्बं कृत्वा शत्रुमावाहयित्वा निरुद्धे देशे घातयेत्[३०]। अश्वपण्योपयाता वैदेहकव्यञ्जनाः पण्यो-पयाननिमित्तमाहूय राजानं पण्यपरीक्षायामासक्तमश्वव्यतिकीर्णं वा हन्युरश्वैश्च प्रहरेयुः[३१]। नगराभ्याशे वा चैत्यमारुह्य रात्रौ तीक्ष्णाः कुम्भेषु नालीन्वा विदुलानि धमन्तः स्वामिनो मुख्यानां वा मांसानि भक्षयिष्यामः पूजा नो वर्ततामित्यव्यक्तं ब्रूयुः[३२]। तदेषां नैमित्तिकमौहूर्तिकव्यञ्जनाः ख्यापयेयुः[३३]। मङ्गल्ये

वा ह्रदे तटाकमध्ये वा रात्रौ तेजनतैलाभ्यक्ता नागरूपिणः शक्तिमुसलान्ययोमयानि निष्पेषयन्तस्तथैव ब्रूयुः[३४]। ऋक्षचर्मकञ्चुकिनो वाग्निधूमोत्सर्गयुक्ता रक्षोरूपं वहन्तस्त्रिरपसव्यं नगरं कुर्वाणाः शिवसृगालवाशितान्तरेषु तथैव ब्रूयुः[३५]। चैत्यदैवतप्रतिमां वा तेजनतैलेनाभ्रपटलच्छन्नेनाग्निना वा रात्रौ प्रज्वाल्य तथैव ब्रूयुः[३६]। तदन्ये ख्यापयेयुः[३७]। दैवतप्रतिमानामभ्यर्हितानां वा शोणितेन प्रस्रावमतिमात्रं कुर्युः[३८]। तदन्ये देवरुधिरसंस्रावे संग्रामे पराजयं ब्रूयुः[३९]। संधिरात्रिषु श्मशानप्रमुखे वा चैत्यमूर्ध्वभक्षितैर्मनुष्यैः प्ररूपयेयुः[४०]। ततो रक्षोरूपी मनुष्यकं याचेत[४१]। यश्चात्र शूरवादिको ऽन्यतमो वा द्रष्टुमागच्छेत्तमन्ये लोहमुसलैर्हन्युः[४२]। यथा रक्षोभिर्हत इति ज्ञायेत[४३]। तदद्भुतं राज्ञस्तद्दर्शिनः सत्त्रिणश्च कथयेयुः[४४]। ततो नैमित्तिकमौहूर्तिकव्यञ्जनाः शान्तिं प्रायश्चित्तं ब्रूयुः[४५]। अन्यथा महदकुशलं राज्ञो देशस्य चेति[४६]। प्रतिपन्नमेतेषु सप्तरात्रमेकैकमन्त्रबलिहोमं स्वयं राज्ञा कर्तव्यमिति ब्रूयुः[४७]। ततः समानम्[४८]। एतान्वा योगानात्मनि दर्शयित्वा प्रतिकुर्वीत[४९]। परेषामुपदेशार्थम्[५०]। ततः प्रयोजयेद्योगान्[५१]। योगदर्शनप्रतीकारेण वा कोशाभिसंहरणं कुर्यात्[५२]। हस्तिकामं वा नागवनपालहस्तिना लक्षण्येन प्रलोभयेयुः[५३]। प्रतिपन्नं गहनमेकायनं वातिनीय घातयेयुर्बध्वा वापहरेयुः[५४]। तेन मृगयाकामो व्याख्यातः[५५]। द्रव्यस्त्रीलोलुपमाढ्यविधवाभिर्वा परमरूपयौवनाभाभिः स्त्रीभिर्दायादनिक्षेपार्थमुपनीताभिः सत्त्रिणः प्रलोभयेयुः[५६]। प्रतिपन्नं रात्रौ सत्त्रिच्छन्नाः समागमे शस्त्ररसाभ्यां घातयेयुः[५७]। सिद्धप्रव्रजितचैत्यस्तूपदैवतप्रतिमानामभीक्ष्णाभिगमनेषु वा भूमिगृहसुरङ्गागूढभित्तिप्रविष्टास्तीक्ष्णाः परमभिहन्युः[५८]।

येषु देशेषु याः प्रेक्षाः प्रेक्षते पार्थिवः स्वयम्।
यात्राविहारे रमते यत्राक्रीडति वाम्भसि[५९] ॥

धिगुत्त्यादिषु सर्वेषु यज्ञप्रवहणेषु वा ।
सूतिकाप्रेतरोगेषु प्रीतिशोकभयेषु वा[60] ॥
प्रमादं याति यस्मिन्वा विश्वासात्स्वजनोत्सवे ।
यत्रास्यारक्षिसंचारो दुर्दिने संकुलेषु वा[61] ॥
विप्रस्थाने प्रदीप्ते वा प्रविष्टे निर्जने ऽपि वा ।
वस्त्राभरणमाल्यानां फेलाभिः शयनासनैः[62] ॥
मध्यभोजनफेलाभिस्तूर्यैर्वाभिहतैः सह ।
प्रहरेयुररींस्तीक्ष्णाः पूर्वप्रणिहितैः सह[63] ॥
यथैव प्रविशेयुश्च द्विषतः सत्त्रहेतुभिः ।
तथैव चापगच्छेयुरित्युक्तं योगवाहनम्[64] ॥

इति दुर्गलम्भोपाये त्रयोदशे ऽधिकरणे योगवामनं द्वितीयो ऽध्यायः ॥२॥
आदितो द्विचत्वारिंशच्छतः ॥१४२॥

---

### १७३ प्रक. अपसर्पप्रणिधिः

श्रेणीमुख्यमाप्तं निष्पातयेत्[1] । स परमाश्रित्य पक्षापदेशेन स्वविषयात्साचिव्यकरसहायोपादानं कुर्वीत[2] । कृतापसर्पोपचयो वा परमनुमान्य स्वामिनो दूष्यग्रामं वीतहस्त्यश्वं दूष्यामात्यं दण्डमाक्रन्दं वा हत्वा परस्य प्रेषयेत्[3] । जनपदैकदेशं श्रेणीमटवीं वा सहायोपादानार्थं संश्रयेत[4] । विश्वासमुपगतः स्वामिनः प्रेषयेत्ततः स्वामिहस्तिबन्धनमटवीघातं वापदिश्य गूढमेव प्रहरेत्[5] । एतेनामात्याटविका व्याख्याताः[6] । शत्रुणा मैत्रीं कृत्वामात्यानवक्षिपेत्[7] । ते तच्छत्रोः प्रेषयेयुः[8] । भर्तारं नः प्रसादयेति स्वयं दूतं प्रेषयेत्[9] । तमुपालभेत[10] । भर्ता ते माममात्यैर्भेदयति[11] । न च पुनरिहागन्तव्यमिति[12] । अथैकममात्यं निष्पातयेत्[13] । स परमाश्रित्य योगापसर्पापरक्तदूष्यानशक्तिमतः स्तेनाटविकानुभयोपघातकान्वा परस्योपहरेत्[14] । आप्तभावोपगतः प्रवीरपुरुषोपघातमस्योपहरेत्[15] । अन्तपालमाटविकं दण्डचारिणं वा[16] । दृढमसौ चासौ च ते शत्रुणा संधत्त इति[17] । अथ पश्चादभिव्यक्तशासनैर-

नान्घातयेत्[18] । दण्डबलव्यवहारेण वा शत्रुमुद्योज्य घातयेत्[19] । कृत्यपक्षोपग्रहेण वा परस्यामित्रं राजानमात्मन्यपकारयित्वाभियुञ्जीत[20] । ततः परस्य प्रेषयेत्[21] । असौ ते वैरी ममापकरोति[22] । तमेहि संभूय हनिष्यावः[23] । भूमौ हिरण्ये वा ते परिग्रह इति[24] । प्रतिपन्नमभिसत्कृत्यागतमवस्कन्देन प्रकाशयुद्धेन वा शत्रुणा घातयेत्[25] । अभिविश्वासनार्थं भूमिदानपुत्राभिषेकरक्षापदेशेन वा ग्राहयेत्[26] । अविषह्यमुपांशुदण्डेन वा घातयेत्[27] । स चेद्दण्डं दद्यान्न स्वयमागच्छेत्तमस्य वैरिणा घातयेत्[28] । दण्डेन वा प्रयातुमिच्छेन्न विजुगीषुणा तथाप्येनमुभयतः संपीडनेन घातयेत्[29] । अविश्वस्तो वा प्रत्येकशो यातुमिच्छेत्तद्राज्यैकदेशं वा यातव्यस्यादातुकामस्तथाप्येनं वैरिणा सर्वसन्दोहेन वा घातयेत्[30] । वैरिणा वा सक्तस्य दण्डोपनयेन मूलमन्यतो हारयेत्[31] । शत्रुभूम्या वा मित्रं पणेत[32] । मित्रभूम्या वा शत्रुम्[33] । ततः शत्रुभूमिलिप्सायां मित्रेणात्मन्यपकारयित्वाभियुञ्जीतेति समानाः पूर्वेण सर्व एव योगाः[34] । शत्रुं वा मित्रभूमिलिप्सायां प्रतिपन्नं दण्डेनानुगृह्णीयात्[35] । ततो मित्रगतमतिसंदध्यात्[36] । ततः प्रतिविधानेन वा व्यसनमात्मनो दर्शयित्वा मित्रेणामित्रमुत्साहयित्वात्मानमभियोजयेत्[37] । ततः संपीडनेन घातयेत्[38] । जीवग्राहेण वा राज्यविनिमयं कारयेत्[39] । मित्रेणाश्रितश्चेच्छत्रुरग्राह्ये स्थातुमिच्छेत्सामन्तादिभिर्मूलमस्य हारयेत्[40] । दण्डेन वा त्रातुमिच्छेत्तमस्य घातयेत्[41] । तौ चेन्न भिद्येयातां प्रकाशमेवान्योन्यस्य भूम्यां पणेत[42] । ततः परस्परं मित्रव्यञ्जनोभयवेतनान्वा दूतान्प्रेषयेयुः[43] । अयं ते राजा भूमिं लिप्सते शत्रुसंहित इति[44] । तयोरन्यतरो जातशङ्कारोषः पूर्ववच्चेष्टेत दुर्गराष्ट्रदण्डमुख्यान्वा कृत्यपक्षहेतुभिरभिविख्याप्य प्रव्राजयेत्[45] । ते युद्धावस्कन्दावरोधव्यसनेषु शत्रुमतिसंदध्युः[46] । भेदं वास्य स्ववर्गेभ्यः कुर्युः[47] । अभिव्यक्तशासनैः प्रतिसमानयेयुः[48] ।

लुब्धकव्यञ्जना वा मांसविक्रयेण द्वास्था दौवारिकापाश्रयाश्चोराभ्यागमं परस्य द्विस्त्रिरिति निवेद्य लब्धप्रत्यया भर्तुरनीकं द्विधा निवेश्य ग्रामवधे ऽवस्कन्दे च द्विषतो ब्रूयुः[४९] । आसन्नश्चोरगणो महांश्चाक्रन्दः[५०] । प्रभूतं सैन्यमागच्छत्विति[५१] । तदर्पयित्वा ग्रामघातदण्डस्य सैन्यमितरदादाय रात्रौ दुर्गद्वारेषु ब्रूयुः[५२] । हतश्चोरगणः[५३] । सिद्धयात्रमिदं सैन्यमागतम्[५४] । द्वारमपाव्रियतामिति[५५] । पूर्वं प्रणिहिता वा द्वाराणि दद्युः[५६] । तैः सह प्रहरेयुः[५७] । कारुशिल्पिपाषण्डकुशीलववैदेहकव्यञ्जनाननायुधीयान्वा परदुर्गे प्रणिदध्यात्[५८] । तेषां गृहपतिकव्यञ्जनाः काष्ठतृणधान्यपण्यशकटैः प्रहरणावरणान्यभिहरेयुः[५९] । देवध्वजप्रतिमाभिर्वा[६०] । ततस्तद्व्यञ्जनाः प्रमत्तवधमवस्कन्दप्रतिग्रहमभिप्रहरणं पृष्ठतः शङ्खदुन्दुभिशब्देन वा प्रविष्टमित्यावेदयेयुः[६१] । प्राकारद्वाराट्टालकदानमनीकभेदं पातं वा कुर्युः[६२] । सार्थगणवासिभिरातिवाहिकैः कन्यावाहिकैरश्वपण्यव्यवहारिभिरुपकरणहारकैर्धान्यक्रेतृविक्रेतृभिर्वा प्रव्रजितलिङ्गिभिर्दूतैश्च दण्डातिनयनं संधिकर्मविश्वासनार्थमिति राजापसर्पाः[३] । एत एवाटवीनामपसर्पाः कण्टकशोधनोक्ताश्च व्रजमटव्यासन्नमपसर्पाः सार्थं वा चोरैर्घातयेयुः[६४] । कृतसंकेतमन्नपानं चात्र मदनरसविद्धं वा कृत्वापगच्छेयुः[६५] । गोपालकवैदेहकाश्च ततश्चोरा गृहीतलोप्त्रभाराः मदनरसविकारकाले ऽवस्कन्दयेयुः[६६] । संकर्षणदैवतीयोगो वा मुण्डजटिलव्यञ्जनः प्रवहणकर्मणा मदनरसयोगमतिसंदध्यात्[६७] । अथावस्कन्दं दद्यात्[६८] । शौण्डिकव्यञ्जनो वा दैवतप्रेतकार्योत्सवसमाजेष्वाटविकान्सुराविक्रयोपायननिमित्तं मदनरसयोगाभ्यामतिसंदध्यात्[६९] । अथावस्कन्दं दद्यात्[७०] ।

ग्रामघातप्रविष्टां वा विक्षिप्य बहुधाटवीम् ।
घातयेदिति चोराणामपसर्पाः प्रकीर्तिताः[७१] ॥

इति दुर्गलम्भोपाये त्रयोदशे ऽधिकरणे अपसर्पप्रणिधिस्तृतीयो ऽध्यायः ॥ ३ ॥
आदितस्त्रिचत्वारिंशच्छतः ॥ १४३ ॥

## १७४—१७५. प्रक. पर्युपासनकर्म अवमर्दश्च.

कर्शनपूर्वं पर्युपासनकर्म[1] । जनपदं यथानिविष्टमुदये स्थापयेत्[2] । उत्थितमनुग्रहपरिहाराभ्यां निवेशयेदन्यत्रापसरतः[3] । संग्राममन्यस्यां भूमौ निवेशयेदेकस्यां वा वासयेत्[4] । न ह्यजनो जनपदो राज्यं जनपदं वा भवतीति कौटिल्यः । विषमस्थस्य मुष्टिं सस्यं वा हन्याद्वीवधप्रसारौ च ।

प्रसारवीवधच्छेदान्मुष्टिसस्यवधादपि ।
वमनाद्गूढघाताच्च जायते प्रकृतिक्षयः ॥

प्रभूतगुणवद्धान्यकुप्ययन्त्रशस्त्रावरणविष्टिरश्मिसमग्रं मे सैन्यमृतुश्च पुरस्तात्[5] । अपर्तुः परस्य व्याधिदुर्भिक्षनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्चेति पर्युपासीत[6] । कृत्वा स्कन्धावारस्य रक्षां वीवधासारयोः पथश्च परिक्षिप्य दुर्गं खातसालाभ्यां दूषयित्वोदकमवस्राव्य परिखाः संपूरयित्वा वा सुरङ्गाबलकुटिकाभ्यां वप्रप्राकारौ हारयेत्[8] । दारं च बहुलेन निम्नं वा पांसुमालयाच्छादयेत्[11] । बहुलारक्षं यन्त्रैर्घातयेत्[12] । निष्कुरादुपनिष्कृष्याश्वैश्च प्रहरेयुः[13] । विक्रमान्तेषु च नियोगविकल्पसमुच्चयैश्चोपायानां सिद्धिं लिप्सेत[14] । दुर्गवासिनः श्येनकाकनप्तृभासशुककशारिकोलूककपोतान्ग्राहयित्वा पुच्छेष्वग्नियोगयुक्तान्परदुर्गे विसृजेयुः[15] । अपकृष्ट स्कन्धावारादुच्छ्रितध्वजधन्वारक्षा वा मानुषेणाग्निना परदुर्गमादीपयेयुः[16] । गूढपुरुषाश्चान्तर्दुर्गपालका नकुलवानरबिडालशुनां पुच्छेष्वग्नियोगमाधाय काण्डनिचयरक्षाविधानवेश्मसु विसृजेयुः[17] । शुष्कमत्स्यानामुदरेष्वग्निमाधाय भल्लूकैर्वावायसोपहारेण वयोभिर्हारयेयुः[18] । सरलदेवदारुपूतितृणगुग्गुलुश्रीवेष्टकसर्जरसलाक्षागुलिकाः खरोष्ट्राजावीनां लण्डं चाग्निधारणम्[19] । प्रिया-

लचूर्णमवल्गुजमषि मधूच्छिष्टमश्वखरोष्ट्रगोलण्डमित्येषक्षेप्यो ऽग्नियोगः[20] । सर्वलोहचूर्णमग्निवर्णं वा कुम्भसीसत्रपुचूर्णं वा पारिभद्रकपलाशपुष्पकेशमषीतैलमधूच्छिष्टकश्रीवेष्टकयुक्तो ऽग्नियोगो विश्वासघाती वा[21] । तेनावलिप्तः शणत्रपुसीसवल्कवेष्टितो बाण इत्यग्नियोगः[22] । न त्वेव विद्यमाने पराक्रमे ऽग्निमवसृजेत्[23] । अविश्वास्यो ह्यग्निः दैवपीडनं च[24] । अप्रतिसंघातप्राणिधान्यपशुहिरण्यकुप्यद्रव्यक्षयकरः[25] । क्षीणनिचयं चावाप्तमपि राज्यं क्षयायैव भवति[26] । इति पर्युपासनकर्म[27] ।

सर्वारम्भोपकरणविष्टिसंपन्नो ऽस्मि[28] । व्याधितः पर उपधाविरुद्धप्रकृतिरकृतदुर्गकर्मनिचयो वा निरासारः सासारो वा पुरा मित्रैः संधत्ते इत्यवमर्दकालः[29] । स्वयमग्नौ जाते समुत्थापिते वा प्रवहणे प्रेक्षानीकदर्शनसङ्गसौरिककलहेषु नित्ययुद्धश्रान्तबले बहुलयुद्धप्रतिविद्धप्रेतपुरुषे जागरणक्लान्तसुप्तजने दुर्दिने नदीवेगे वा नीहारसंप्लवे वावमृद्नीयात्[30] । स्कन्धावारमुत्सृज्य वा वनगूढः शत्रुं निष्क्रान्तं घातयेत्[31] । मित्रासारमुख्यव्यञ्जनो ऽवसंरुद्धेन मैत्रीं कृत्वा दूतमभिव्यक्तं प्रेषयेत्[32] । इदं ते छिद्रम्[33] । इमे दूष्याः[34] । संरोद्धुर्वा छिद्रमयं ते कृत्यपक्ष इति[35] । तं प्रतिदूतमादाय निर्गच्छन्तं विजिगीषुर्गृहीत्वा दोषमभिविख्याप्य प्रवास्यापगच्छेत्[36] । ततो मित्रासारव्यञ्जनो वा संरुद्धं ब्रूयात्[37] । मां त्रातुमुपनिर्गच्छ[38] । मया वा सह संरोद्धारं जहीति[39] । प्रतिपन्नमुभयतः संपीडनेन घातयेत् । जीवग्राहेण वा राज्यविनिमयं कारयेत्[41] । नगरं वास्य प्रमृद्नीयात्[42] । सारबलं वास्य वमयित्वाभिहन्यात्[43] । तेन दण्डोपनताटविका व्याख्याताः[44] । दण्डोपनताटविकयोरन्यतरो वा संरुद्धस्य प्रेषयेत्[45] । अयं संरोद्धा व्याधितः पार्ष्णिग्राहेणाभियुक्तश्छिद्रमन्यदुत्थितमन्यस्यां भूमावपयातुकाम इति[46] । प्रतिपन्ने संरोद्धा स्कन्धावारमादीप्यापयायात्[47] । ततः पूर्ववदाचरेत्[48] ।

पण्यसंपातं वा कृत्वा पण्येनैनं रसविद्धेनातिसंदध्यात्[४९]। आसारव्यञ्जनो वा संरुद्धस्य दूतं प्रेषयेत्[५०]। मया वा ह्यभिहतमुपनिर्गच्छाभिहन्तुमिति[५१]। प्रतिपन्नं पूर्ववदाचरेत्[५२]। मित्रं बन्धुं वापदिश्य योगपुरुषाः शासनमुद्राहस्ताः प्रविश्य दुर्गं ग्राहयेयुः[५३]। आसारव्यञ्जनो वा संरुद्धस्य प्रेषयेत्[५४]। अमुष्मिन्देशे काले च स्कन्धावारमभिहनिष्यामि[५५]। युष्माभिरपि योद्धव्यमिति[५६]। प्रतिपन्नं यथोक्तमभ्याघातसंकुलं दर्शयित्वा रात्रौ दुर्गान्निष्क्रान्तं घातयेत्[५७]। यद्वा मित्रमावाहयेत्[५८]। आटविकं वा तमुत्साहयेत्[५९]। विक्रम्य संरुद्धे भूमिमस्य प्रतिपद्यस्वेति[६०]। विक्रान्तं प्रकृतिभिर्दूष्यमुख्योपग्रहेण वा घातयेत्[६१]। स्वयं वा रसेन मित्रघातको ऽयमित्यवाप्तार्थो विक्रमितुकामं वा मित्रव्यञ्जनः परस्याभिशंसेत्[६२]। आप्तभावोपगतः प्रवीरपुरुषानस्योपघातयेत्[६३]। संधिं वा कृत्वा जनपदमेनं निवेशयेत्[६४]। निविष्टमस्य जनपदमविज्ञातो हन्यात्[६५]। अपकारयित्वा दूष्याटविकेषु वा बलैकदेशमतिनीय दुर्गमवस्कन्देन हारयेत्[६६]। दूष्यामित्राटविकद्वेष्यप्रत्यपसृताश्च कृतार्थमानसंज्ञाचिह्नाः परदुर्गमवस्कन्देयुः[६७]। परदुर्गमवस्कन्द्य स्कन्धावारं वा पतितपराङ्मुखाभिपन्नमुक्तकेशशस्त्रभयविरूपेभ्यश्चाभयमयुध्यमानेभ्यश्च दद्युः[६८]। परदुर्गमवाप्य विशुद्धशत्रुपक्षं कृतोपांशुदण्डप्रतीकारमन्तर्बहिश्च प्रविशेत्[६९]। एवं विजिगीषुरमित्रभूमिं लब्ध्वा मध्यमं लिप्सेत[७०]। तत्सिद्धावुदासीनम्[७१]। एष प्रथमो मार्गः पृथिवीं जेतुम्[७२]। मध्यमोदासीनयोरभावे गुणातिशयेनारिप्रकृतीः साधयेत्[७३]। तत उत्तराः प्रकृतीः[७४]। एष द्वितीयो मार्गः[७५]। मण्डलस्याभावे शत्रुणा मित्रं मित्रेण वा शत्रुमुभयतः संपीडनेन साधयेत्[७६]। एष तृतीयो मार्गः[७७]। शक्यमेकं वा सामन्तं साधयेत्[७८]। तेन द्विगुणो द्वितीयं त्रिगुणस्तृतीयम्[७९]। एष चतुर्थो मार्गः पृथिवीं जेतुम्[८०]। जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत[८१]।

उपजापापसर्पौ च वामनं पर्युपासनम् ।
अवमर्दश्च पञ्चैते दुर्गलम्भस्य हेतवः[58] ॥

इति दुर्गलम्भोपाये त्रयोदशेऽधिकरणे पर्युपासनकर्म, अवमर्दश्च चतुर्थोऽध्यायः ॥ ४ ॥ आदितश्चतुश्चत्वारिंशच्छतः ॥ १४४ ॥

---

१७६ प्रक॰ लब्धप्रशमनम्.

द्विविधं विजिगीषोः समुत्थानम्[1] । अटव्यादिकमेकग्रामादिकं च[2] । त्रिविधश्चास्य लम्भः[3] । नवो भूतपूर्वः पित्र्य इति[4] । नवमवाप्य लाभं परदोषान्स्वगुणैश्छादयेत्[5] । गुणान्गुणद्वैगुण्येन स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिश्च प्रकृतिप्रियहितान्यनुवर्तेत[6] । यथासंभाषितं च कृत्यपक्षमुपग्राहयेत्[7] । भूयश्च कृतप्रयासम्[8] । अविश्वास्यो हि विसंवादकः स्वेषां परेषां च भवति प्रकृतिविरुद्धाचारश्च[9] । तस्मात्समानशीलवेषभाषाचारतामुपगच्छेत्[10] । देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत[11] । देशग्रामजातिसंघमुख्येषु चाभीक्ष्णं सत्त्रिणः परस्यापचारं दर्शयेयुः[12] । महाभाग्यं भक्तिं च तेषु स्वामिनः स्वामिसत्कारं च विद्यमानम्[13] । उचितैश्चैनान्भोगपरिहाररक्षावेक्षणैः भुञ्जीत सर्वदेवताश्रमपूजनं च विद्यावाक्यधर्मशूरपुरुषाणां च भूमिद्रव्यदानपरिहारान्कारयेत्[14] । सर्वबन्धनमोक्षणमनुग्रहं दीनानाथव्याधितानां च[15] । चातुर्मास्येष्वर्धमासिकमघातम्[16] । पौर्णमासीषु च चातूरात्रिकम्[17] । राजदेशनक्षत्रेष्वैकरात्रिकम्[18] । योनिबालवधं पुंस्त्वोपघातं च प्रतिषेधयेत्[19] । यच्च कोशदण्डोपघातिकमधर्मिष्ठं वा चरित्रं मन्येत तदपनीय धर्मव्यवहारं स्थापयेत्[20] । चोरप्रकृतीनां म्लेच्छजातीनां च स्थानविपर्यासमनेकस्थं कारयेत्[21] । दुर्गराष्ट्रदण्डमुख्यानां च परोपगृहीतानां च मन्त्रिपुरोहितादीनां परस्य प्रत्यन्तेष्वनेकस्थं वासं कारयेत्[22] । अपकारसमर्थाननुक्षीयतो वा भर्तृविनाशमुपांशुदण्डेन प्रशमयेत्[23] । स्वदेशीयान्वा परेण वावरुद्धानपवाहित-

स्थानेषु स्थापयेत्[२४] । यश्च तत्कुलीनः प्रत्यादेयमादातुं शक्तः प्रत्यन्ताटवीस्थो वा प्रबाधितुमभिजातस्तस्मै विगुणां भूमिं प्रयच्छेत्[२५] । गुणवत्याश्चतुर्भागं वा[२६] । कोशदण्डदानमवस्थाप्य यदुपकुर्वाणः पौरजानपदान्कोपयेत्कुपितैस्तैरेनं घातयेत्[२७] । प्रकृतिभिरुपक्रुष्टमपनयेत्[२८] । औपघातिके वा देशे निवेशयेदिति[२९] । भूतपूर्वे येन दोषेणापवृत्तस्तं प्रकृतिदोषं छादयेत्[३०] । येन च गुणेनोपावृत्तस्तं तीव्रीकुर्यादिति[३१] । पित्र्ये पितृदोषांश्छादयेत्[३२] । गुणांश्च प्रकाशयेदिति[३३] ।

चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत् ।
प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत्[३४] ॥

इति दुर्गलम्भोपाये त्रयोदशे ऽधिकरणे लब्धप्रशमनं पञ्चमो ऽध्यायः ॥५॥
आदितः पञ्चचत्वारिंशच्छतः ॥१४५॥ एतावता कौटिलीयस्यार्थशास्त्रस्य
दुर्गलम्भोपायस्त्रयोदशाधिकरणं समाप्तम् ॥१३॥

---

# १४ अधि. औपनिषदिकम्.

## १७७ प्रक. परघातप्रयोगः.

चातुर्वर्ण्यरक्षार्थमौपनिषदिकमधार्मिष्ठेषु प्रयुञ्जीत । कालकूटादिः विषवर्गः श्रद्धेयदेशवेषशिल्पभाजनापदेशैः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मभिः म्लेच्छजातीयैरभिप्रेतैः स्त्रीभिः पुंभिश्च परशरीरोपभोगेष्ववधातव्यः । राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु गूढाः शस्त्रनिधानं कुर्युः[३] । सत्त्राजीविनश्च रात्रिचारिणो ऽग्निजीविनश्चाग्निनिधानम्[४] । चित्रभेककौण्डिन्यककृकणपञ्चकुष्ठशतपदीचूर्णमुच्चिदिङ्गकं बलीशतकन्देध्मकृकलासचूर्णं गृहगौलिकान्धाहिककृकण्ठकपूतिकीटगोमारिकाचूर्णं भल्लातकं वल्गुकारसयुक्तं सद्यःप्राणहरमेतेषां वा धूमः[५] ।

कीटो वान्यतमस्तप्तः कृष्णसर्पप्रियङ्गुभिः ।
शोषयेदेष संयोगः सद्यः प्राणहरो मतः[६] ॥

धामार्गवयातुधानमूलं भल्लातकपुष्पचूर्णयुक्तमार्धमासिकः । व्याघातकमूलं भल्लातकपुष्पचूर्णयुक्तं कीटयोगो मासिकः । कलामात्रं पुरुषाणां द्विगुणं खराश्वानां चतुर्गुणं हस्त्युष्ट्राणाम् । शतकर्दमोच्चिदिङ्गकरवीरकटुतुम्बीमत्स्यधूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रवातानुवाते प्रणीतो यावच्चरति तावन्मारयति[10] । पूतिकीटमत्स्यकटुतुम्बशितकर्दमध्मेन्द्रगोपचूर्णं पूतिकीटक्षुद्रारालाहेमविदारीचूर्णं वा बस्तशृङ्गखुरचूर्णयुक्तमन्धीकरो धूमः[11] । पूतिकरञ्जपत्त्रहरितालमनःशिलागुञ्जारक्तकार्पासपललान्यास्फोटकाचगोशकृद्रसपिष्टमन्धीकरो धूमः[12] । सर्पनिर्मोकं गोश्वपुरीषमन्धाहिकशिरश्चान्धीकरो धूमः[13] । पारावतप्लवकक्रव्यादानां हस्तिनरवराहाणां च मूत्रपुरीषं कासीसहिङ्गुयवतुषकणतण्डुलाः कार्पासकुटजकोशातकीनां च बीजानि गोमूत्रिकाभाण्डीमूलं निम्बशिग्रुफणर्जकाक्षीवपीलुकभाङ्गः सर्पशफरीचर्महस्तिनखशृङ्गचूर्णमित्येष धूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रणीतः प्रत्येकशो यावच्चरति तावन्मारयति[14] । कालीकुष्ठनडशतावरीमूलं सर्पप्रचलाककृकणपञ्चकुष्ठचूर्णं वा धूमः पूर्वकल्केनार्द्रशुष्कपलालेन वा प्रणीतः संग्रामावतरणावस्कन्दनसंकुलेषु कृतनाञ्जनोदकाक्षिप्रतीकारैः प्रणीतः सर्वप्राणिनां नेत्रघ्नः[15] । शारिकाकपोतबकबलाकालण्डमङ्काक्षीपीलुकस्नुहिक्षीरपिष्टमन्धीकरणमञ्जनमुदकदूषणं च[16] । यवकशालिमूलमदनफलजातीपत्त्रनरमूत्रयोगः प्लक्षविदारीमूलयुक्तो मूकोदुम्बरमदनकोद्रवक्काथयुक्तो हस्तिकर्णपलाशक्काथयुक्तो वा मदनयोगः[17] । शृङ्गिगौतमवृक्षकण्टकारमयूरपदीयोगो गुञ्जालाङ्गलीविषमूलिकेङ्गुदीयोगः[18] । करवीराक्षिपीलुकार्कमृगमारणीयोगो मदनकोद्रवक्काथयुक्तो हस्तिकर्णपलाशक्काथयुक्तो वा मदनयोगः[19] । समस्ता वा यवसेन्धनोदकदूषणाः[20] । कृतण्डककृकलासगृहगोलिकान्धाहिकधूमो नेत्रवधमुन्मादं च करोति[21] ।

कृकलासगृहगोलिकायोगः कुष्ठकरः[33]। स एव चित्रभेकान्त्रमधुयुक्तः प्रमोहमापादयति[34]। मनुष्यलोहितयुक्तः शोषम्[35]। दूषीविषं मदनकोद्रवचूर्णमपजिह्विकायोगः[35]। मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपलिकयोगो विषूचिकाकरः[36]। पञ्चकुष्ठककौण्डिन्यकराजवृक्षमधुपुष्पमधुयोगो ज्वरकरः[27]। भासनकुलजिह्वाग्रन्थिकायोगः खरीक्षीरपिष्टो मूकबधिरकरः[28]। मासार्धमासिकः कलामात्रं पुरुषाणामिति समानं पूर्वेण[29]। भङ्गक्काथोपनयनमौषधानां चूर्णं प्राणभृतां सर्वेषां वा क्काथोपनयनमेवं वीर्यवत्तरं भवतीति योगसंपत्[30]। शाल्मलीविदारीधान्यसिद्धो मूलवत्सनाभसंयुक्तश्चुचुन्दरीशोणितप्रलेपेन दिग्धो बाणो यं विध्यति स विद्धो ऽन्यान्दश पुरुषान्दशति[31]। ते दष्टाश्चान्यान्दशन्ति पुरुषान्[32]। भल्लातकयातुधानावाजुधायामार्गवबाणानां पुष्पैरेलकाक्षिगुग्गुलुहालाहलानां च कषायं बस्तनरशोणितयुक्तं दंशयोगः[33]। ततो ऽर्धधरणिको योगः सक्तुपिण्याकाभ्यामुदके प्रणीतो धनुःशतायाममुदकाशयं दूषयति[34]। मत्स्यपरम्परा ह्येतेन दष्टाभिमृष्टा वा विषीभवन्ति[35]। यश्चैतदुदकं पिबति स्पृशति वा[36]। रक्तश्वेतसर्षपैर्गोधात्रीपत्रमुष्टिकायां भूमौ निखातायां निहिता वध्येनोद्धृता यावत्पश्यति तावन्मारयति[37]। कृष्णसर्पो वा विद्युत्प्रदग्धोऽङ्गारोज्ज्वलो वा विद्युत्प्रदग्धैः काष्ठैर्गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाभिहुतो ऽग्निः प्रणीतश्च निष्प्रतिकारो दहति[38]।

कर्मारादग्निमाहृत्य क्षौद्रेण जुहुयात्पृथक्।
सुरया शौण्डिकादग्निं भागं यो ऽग्निं घृतेन च[39]॥
माल्येन चैकपत्न्यग्निं पुंश्चल्यग्निं च सर्षपैः।
दध्ना च सूतिकास्वग्निमाहिताग्निं च तण्डुलैः[40]॥
चण्डालाग्निं च मांसेन चिताग्निं मानुषेण च।
समस्तान्बस्तवसया मानुषेण ध्रुवेण च[41]॥

जुहुयादग्निमन्त्रेण राजवृक्षस्यदारुभिः ।
एष निष्प्रतिकारो ऽग्निर्द्विषतां नेत्रमोहनैः[४२] ॥

अदिते नमस्ते[४३] । अनुमते नमस्ते[४४] । सरस्वति नमस्ते[४५] । सवितर्नमस्ते[४६] । अग्नये स्वाहा[४७] । सोमाय स्वाहा[४८] । भूः स्वाहा[४९] । भुवः स्वाहा[५०] ।

इत्यौपनिषदिके चतुर्दशे ऽधिकरणे परघातप्रयोगः प्रथमो ऽध्यायः ॥ १ ॥
आदितः षट्चत्वारिंशदुत्तरशतः ॥ १४६ ॥

१७८ प्रक. प्रलम्भने अद्भुतोत्पादनम्.

शिरीषोदुम्बरशमीचूर्णं सर्पिषा संहृत्यार्धमासिकः क्षुद्योगः[१] । कशेरुकोत्पलकन्देक्षुमूलबिसदूर्वाक्षीरघृतमण्डसिद्धो मासिकः[२] । माषयवकुलुत्थदर्भमूलचूर्णं वा क्षीरघृताभ्याम्[३] । वल्लीक्षीरघृतं वा समसिद्धं सालपृश्निपर्णीमूलकल्कं पयसा पीत्वा[४] । पयो वा तत्सिद्धं मधुघृताभ्यामशित्वा मासमुपवसति[५] । श्वेतबस्तमूत्रे सप्तरात्रोषितैः सिद्धार्थकैः सिद्धं तैलं कटुकालाबौ मासार्धमासस्थितं चतुष्पदद्विपदानां विरूपकरणम्[६] । तक्रयवभक्षस्य सप्तरात्रादूर्ध्वं श्वेतगर्दभस्य लण्डयवैः सिद्धं गौरसर्षपतैलं विरूपकरणम्[७] । एतयोरन्यतरस्य मूत्रलण्डरससिद्धं सिद्धार्थतैलमर्कतूलपतङ्गचूर्णप्रतिवापं श्वेतीकरणम्[८] । श्वेतकुक्कुटाजगरलण्डयोगः श्वेतीकरणम्[९] । श्वेतबस्तमूत्रे श्वेतसर्षपाः सप्तरात्रोषितास्तक्रमर्कक्षीरलवणं धान्यं च पक्षस्थितो योगः श्वेतीकरणम्[१०] । कटुकालाबूवल्लीगते गतमर्धमासस्थितं गौरसर्षपपिष्टं रोम्णां श्वेतीकरणम्[११] ।

अलाबुनेति यः कीटः श्वेता च गृहगोलिका ।
एतेन पिष्टेनाभ्यक्ताः केशाः स्युः शङ्खपाण्डराः[१२] ॥

गोमयेन तिन्दुकारिष्टकल्केन वा मर्दिताङ्गस्य भल्लातकरसानुलिप्तस्य मासिकः कुष्ठयोगः[१३] । कृष्णसर्पमुखे गृहगोलिकामुखे

वा सप्तरात्रोषिता गुञ्जाः कुष्ठयोगः[१४] । शुकपित्ताण्डरसाभ्यङ्गः कुष्ठयोगः[१५] । कुष्ठस्य प्रियालकल्ककषायः प्रतीकारः[१६] । कुक्कुटकोशातकीशतावरीमूलयुक्तमाहारयमाणो मासेन गौरो भवति[१७] । वटकषायस्नातः सहचरकल्कदिग्धः कृष्णो भवति[१८] । शकुनकङ्गुतैलयुक्ता हरितालमनःशिलाः श्यामीकरणम्[१९] । खद्योतचूर्णं सर्षपतैलयुक्तं रात्रौ ज्वलति[२०] । खद्योतगण्डूपदचूर्णं समुद्रजन्तूनां भृङ्गकपालानां खदिरकर्णिकाराणां पुष्पचूर्णं वा शकुनकङ्गुतैलयुक्तं तेजनचूर्णम्[२१] । पारिभद्रकत्वङ्मषी मण्डूकवसया युक्ता गात्रप्रज्वालनमग्निना[२२] । पारिभद्रकत्वक्तिलकल्कप्रदिग्धं शरीरमग्निना ज्वलति[२३] । पीलुत्वङ्मषीमयः पिण्डो हस्ते ज्वलति[२४] । मण्डूकवसादिग्धोऽग्निना ज्वलति[२५] । तेन प्रदिग्धमङ्गं कुशाम्रफलतैलसिक्तं समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा ज्वलति[२६] । मण्डूकवसाकुलीरादीनां वसया समभागं तैलं सिद्धमभ्यङ्गो गात्राणामग्निप्रज्वालनम्[२७] । वेणुमूलशैवललिप्तमङ्गं मण्डूकवसादिग्धमग्निना ज्वलति[२८] । पारिभद्रकप्रतिबलावञ्जुलवज्रकदलीमूलकल्केन मण्डूकवसासिद्धेन तैलेनाभ्यक्तपादोऽङ्गारेषु गच्छति[२९] ।

उपोदका प्रतिबला वञ्जुलः पारिभद्रकः ।
एतेषां मूलकल्केन मण्डूकवसया सह[३०] ॥
साधयेत्तैलमेतेन पादावभ्यज्य निर्मलौ ।
अङ्गारराशौ विचरेद्यथा कुसुमसंचये[३१] ॥

हंसक्रौञ्चमयूराणामन्येषां वा महाशकुनीनामुदकप्लवानां पुच्छेषु बद्धा नलदीपिका रात्रावुल्कादर्शनम्[३२] । वैद्युतं भस्माग्निशमनम्[३३] । स्त्रीपुष्पपायिता माषा व्रजकुलीमूलमण्डूकवसामिश्रं चुल्ल्यां दीप्तायामपाचनम्[३४] । चुल्लीशोधनं प्रतीकारः[३५] । पीलुमयो मणिरग्निगर्भः सुवर्चलामूलग्रन्थिः सूत्रग्रन्थिर्वा पिचुपरिवेष्टितो मुखादग्निधूमोत्सर्गः[३६] । कुशाम्रफलतैलासिक्तोऽग्निर्वर्षप्रवषुता

ज्वलति[३७] । समुद्रफेनकस्तैलयुक्तो ऽम्भसि प्लवमानो ज्वलति[३] । प्लवमानामस्थिषु कल्माषवेणुना निर्मथितो ऽग्निर्नोदकेन शाम्यत्युदकेन ज्वलति[३८] । शस्त्रहतस्य शूलप्रोतस्य वा पुरुषस्य वामपार्श्वपर्शुकास्थिषु कल्माषवेणुना निर्मथितो ऽग्निः स्त्रियाः पुरुषस्य वास्थिषु मनुष्यपर्शुकया निर्मथितो ऽग्निर्यत्र त्रिरपसव्यं गच्छति न चात्रान्यो ऽग्निर्ज्वलति[४०] ।

चुचुन्दरी खञ्जरीटः खारकीटश्च पिष्यते ।
अश्वमूत्रेण संसृष्टा निगलानां तु भञ्जनम्[४१] ॥

अयस्कान्तो वा पाषाणः कुलिन्ददर्दुरखारकीटवसाप्रदेहेन द्विगुणो नारकगर्भः कङ्कभासपार्श्वोत्पलोदकपिष्टश्चतुष्पदद्विपदानां पादलेप उलूकगृध्रवसाभ्यामुष्ट्रचर्मोपनाहावभ्यज्य वटपत्रैः प्रतिच्छाद्य पञ्चाशद्योजनान्यश्रान्तो गच्छति[४२] । श्येनकङ्ककाकगृध्रहंसक्रौञ्चवीचीरल्लानां मज्जानो रेतांसि वा योजनशताय[४३] । सिंहव्याघ्रद्वीपिकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि गर्भपतनान्युष्ट्रिकायामभिषूय श्मशाने प्रेतशिशून्वा तत्समुत्थितं मेदो योजनशताय[४४] ।

अनिष्टैरद्भुतोत्पातैः परस्योद्वेगमाचरेत् ।
आराज्यायेति निर्वादः समानः कोप उच्यते[४५] ॥

इत्यौपनिषदिके चतुर्दशे ऽधिकरणे प्रलम्भने अद्भुतोत्पादनं द्वितीयो ऽध्यायः॥२॥
आदितः सप्तचत्वारिंशदुत्तरशतः ॥१४७॥

---

१७८ प्रक. प्रलम्भने भैषज्यमन्त्रयोगः.

मार्जारोष्ट्रवृकवराहश्वाविध्वागुलीनप्तृकाकोलूकानामन्येषां वा निशाचराणां सत्त्वानामेकस्य द्वयोर्बहूनां वा दक्षिणानि वामानि चाक्षीणि गृहीत्वा द्विधा चूर्णं कारयेत् । ततो दक्षिणं वामेन वामं दक्षिणेन समभ्यज्य रात्रौ तमसि च पश्यति[२] ।

एकाम्लकं वराहाक्षि खद्योतः कालशारिवा ।
एतेनाभ्यक्तनयनो रात्रौ रूपाणि पश्यति[३] ॥

त्रिरात्रोपोषितः पुष्ये शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां यवानां वस्ताविक्षीरेण सेचयेत् । ततो यवविरूढमालामाबद्ध्य नष्टच्छायारूपश्चरति[५] । त्रिरात्रोपोषितः पुष्येण श्वमार्जारोलूकवागुलीनां दक्षिणानि वामानि चाक्षीणि द्विधा चूर्णं कारयेत् । ततो यथास्वमभ्यक्ताक्षो नष्टच्छायारूपश्चरति[७] । त्रिरात्रोपोषितः पुष्येण पुरुषघातिनः काण्डकस्य शलाकामञ्जरीं च कारयेत् । ततो ऽन्यतमेनाक्षिचूर्णेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति[८] । त्रिरात्रोपोषितः पुष्येण कालायसीमञ्जनीं शलाकां च कारयेत्[१०] । ततो निशाचराणां सत्त्वानामन्यतमस्य शिरः कपालमञ्जनेन पूरयित्वा मृतायाः स्त्रिया योनौ प्रवेश्य दाहयेत्[११] । तदञ्जनं पुष्येणोद्धृत्य तस्यामञ्जन्यां निदध्यात्[१२] । तेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति[१३] । यत्र ब्राह्मणमाहिताग्निं दग्धं दह्यमानं वा पश्येत्तत्र त्रिरात्रोपोषितः पुष्येण स्वयंमृतस्य वाससा प्रसेवं कृत्वा चिताभस्मना पूरयित्वा तमाबध्य नष्टच्छायारूपश्चरति[१४] । ब्राह्मणस्य प्रेतकार्ये यो गौः मार्यते तस्यास्थिमज्जाचूर्णपूर्णाहिभस्त्रा पशूनामन्तर्धानम्[१५] । सर्पदष्टस्य भस्मना पूर्णा प्रचलाकभस्त्रा मृगाणामन्तर्धानम्[१६] । उलूकवागुलीपुच्छपुरीषजान्वस्थिचूर्णपूर्णाहिभस्त्रा पक्षिणामन्तर्धानम्[१७] । इत्यष्टावन्तर्धानयोगाः[१८] ।

बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।
भण्डीरपाकं नरकं निकुम्भं कुम्भमेव च ॥
देवलं नारदं वन्दे वन्दे सावर्णिगालवम् ।
एतेषामनुयोगेन कृतं ते स्वापनं महत्[२०] ॥
यथा स्वपन्त्यजगराः स्वपन्त्यपि चमूखलाः ।
तथा स्वपन्तु पुरुषा ये च ग्रामे कुतूहलाः[२१] ॥
भण्डकानां सहस्रेण रथनेमिशतेन च ।
इमं गृहं प्रवेक्ष्यामि तूष्णीमासन्तु भाण्डकाः[२२] ॥

नमस्कृत्वा च मनवे बध्वा शुनकफेलकाः ।
ये देवा देवलोकेषु मानुषेषु च ब्राह्मणाः[23] ॥
अद्ध्ययनपारगाः सिद्धा ये च कैलासतापसाः ।
एतेभ्यः सर्वसिद्धेभ्यः कृतं ते स्वापनं महत्[24] ॥
अतिगच्छति चमर्यपगच्छन्तु संहताः[25] ।
अलिते पलिते मनवे स्वाहा[26] ॥

एतस्य प्रयोगः[27] । त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्यां श्वपाकीहस्ताद्विलखावलेखनं क्रीणीयात्[28] । तन्माषैः सह कण्डोलिकायां कृत्वासङ्कीर्ण आदहने निखानयेत्[29] । द्वितीयस्यां चतुर्दश्यामुद्धृत्य कुमार्या पेषयित्वा गुलिकाः कारयेत्[30] । तत एकां गुलिकामभिमन्त्रयित्वा यत्रैतेन मन्त्रेण क्षिपति तत्सर्वं प्रस्वापयति[31] । एतेनैव कल्पेन श्वाविधः शल्यकं त्रिकालं त्रिश्वेतमसङ्कीर्ण आदहने निखानयेत्[32] । द्वितीयस्यां चतुर्दश्यामुद्धृत्य दहनभस्मना सह यत्रैतेन मन्त्रेण क्षिपति तत्सर्वं प्रस्वापयति[33] ।

सुवर्णपुष्पीं ब्रह्माणीं ब्रह्माणं च कुशध्वजम् ।
सर्वाश्च देवता वन्दे वन्दे सर्वांश्च तापसान्[34] ॥
वशं मे ब्राह्मणा यान्तु भूमिपालाश्च क्षत्रियाः ।
वशं वैश्याश्च शूद्राश्च वशतां यान्तु मे सदा[35] ॥

स्वाहा अमिले किमिले वयुजारे प्रयोगे फके कवयुश्वे विहाले दन्तकटके स्वाहा[36] ।

सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ।
श्वाविधः शल्यकं चैतत्त्रिश्वेतं ब्रह्मनिर्मितम्[37] ॥
प्रसुप्ताः सर्वसिद्धा हि एतत्ते स्वापनं कृतम् ।
यावद्ग्रामस्य सीमान्तः सूर्यस्योद्गमनादिति[38] ॥

स्वाहा[39] ।

एतस्य प्रयोगः[40] । श्वाविधः शल्यकानि त्रिश्वेतानि सप्तरात्रोपोषितः कृष्णचतुर्दश्यां खादिराभिः समिधाभिरग्निमेतेन मन्त्रेणा-

ष्टशतसंपातं कृत्वा मधुघृताभ्यामभिजुहुयात्[४१] । तत एकमेतेन मन्त्रेण ग्रामद्वारि गृहद्वारि वा यत्र निखन्यते तत्सर्वं प्रस्वापयति[४२] ।

बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।
निकुम्भं नरकं कुम्भं तन्तुकच्छं महासुरम्[४३] ॥
अर्मालवं प्रमीलं च मण्डोलूकं घटोद्बलम् ।
कृष्णकंसोपचारं च पौलोमीं च यशस्विनीम्[४४] ॥
अभिमन्त्रय्य गृह्णामि सिद्धार्थं शवसारिकाम् ।
जयन्तु जयति च नमः शलकभूतेभ्यः स्वाहा[४५] ।
सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः[४६] ॥
सुखं स्वपन्तु सिद्धार्था यमर्थं मार्गयामहे ।
यावदस्तमयादुदयो यावदर्थं फलं मम[४७] ॥

इति स्वाहा[४८] ।

एतस्य प्रयोगः[४९] । चतुर्भक्तोपवासी कृष्णचतुर्दश्यामसंकीर्ण आदहने बलिं कृत्वा मन्त्रेण शवशारिकां गृहीत्वा पत्रपोट्टलिको बध्नीयात्[५०] । तन्मध्ये श्वाविधः शल्यकेन विध्वा यत्रैतेन मन्त्रेण निखन्यते तत्सर्वं प्रस्वापयति[५१] ।

उपैमि शरणं चाग्निं दैवतानि दिशो दश ।
अपयान्तु च सर्वाणि वशतां यान्तु मे सदा[५२] ॥

स्वाहा[५३] ।

एतस्य प्रयोगः[५४] । त्रिरात्रोपोषितः पुष्येण शर्करा एकविंशतिसंपातं कृत्वा मधुघृताभ्यामभिजुहुयात्[५५] । ततो गन्धमाल्येन पूजयित्वा निखानयेत्[५६] । द्वितीयेन पुष्येणोद्धृत्यैकां शर्करामभिमन्त्रय्य कवाटमाहन्यात्[५७] । अभ्यन्तरं चतसृणां शर्कराणां द्वारमपात्रियते[५८] । चतुर्भक्तोपवासी कृष्णचतुर्दश्यां भग्नस्यपुरुषस्यास्थ्ना ऋषभं कारयेत्[५९] । अभिमन्त्रयेच्च[६०] । एतेन द्विगोयुक्तं गोयानमाहृतं भवति[६१] । ततः परमाकाशे विक्रामति[६२] । रविसन्धपरिख्याति सर्वं भणाति[६३] । चण्डालीकुम्बीतुम्भकटुकसारीघः सनीरीभगो ऽसि स्वाहा[६४] ।

तालोद्घाटनं प्रस्वापनं च[६५] । त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां तुवरीवास्योदकेन सेचयेत्[६६] । जातानां पुष्येणैव गृहीत्वा रज्जुकां वर्तयेत्[६७] । ततः सज्यानां धनुषां यन्त्राणां च पुरस्ताच्छेदनं ज्याच्छेदनं करोति[६८] । उदकाहिभस्त्रामुच्छ्वासमृत्तिकया स्त्रियाः पुरुषस्य वा पूरयेत्[६९] । नासिकावर्धनम्[७०] । मुखग्रहश्च वराहहस्तिभस्त्रामुच्छ्वासमृत्तिकया पूरयित्वा मर्कटस्नायुना बध्नीयात्[७१] । आनाहकारणम्[७२] । कृष्णचतुर्दश्यां शस्त्रहताया गोः कपिलायाः पित्तेन राजवृक्षमयीममित्रप्रतिमां मज्ज्यात्[७३] । अन्धीकरणम्[७४] । चतुर्भक्तोपवासी कृष्णचतुर्दश्यां बलिं कृत्वा शूलप्रोतस्य पुरुषस्यास्थ्ना कीलकान्कारयेत्[७५] । एतेषामेकः पुरीषे मूत्रे वा निखात आनाहं करोति[७६] । पादेऽस्यासने वा निखातः शोषेण मारयति[७७] । आपणे क्षेत्रे गृहे वा वृत्तिच्छेदं करोति[७८] । एतेन लेपकल्केन विद्युद्दग्धस्य वृक्षस्य कीलका व्याख्याताः[७९] ।

पुनर्नवमवाचीनं निम्बः काममधुश्च यः ।
कपिरोममनुष्यास्थि बध्वा मृतकवाससा ॥
निखन्यते गृहे यस्य दृष्ट्वा वा यं पदं नयेत् ।
सपुत्रदारः सधनस्त्रीन्पक्षान्नातिवर्तते[८१] ॥
पुनर्नवमवाचीनं निम्बः काममधुश्च यः ।
स्वयंगुप्ता मनुष्यास्थि पदे यस्य निखन्यते[८२] ॥
पारे गृहस्य सेनाया ग्रामस्य नगरस्य वा ।
सपुत्रदारः सधनः त्रीन्पक्षान्नातिवर्तते[८३] ॥
अजमर्कटरोमाणि मार्जारनकुलस्य च ।
ब्राह्मणानां श्वपाकानां काकोलूकस्य चाहरेत्[८४] ॥
एतेन पिष्ठावक्षुण्णा सद्य उत्सादकारिका ।
प्रेतनिर्मालिकाकिण्वं रोमाणि नकुलस्य च[८५] ॥

वृश्चिकाल्यहिकृत्तिश्च पदे यस्य निखन्यते ।
भवत्यपुरुषः सद्यो यावत्तन्नापनीयते[८६] ॥

त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां गुञ्जा आवास्योदकेन च सेचयेत्[८७] । जातानाममावास्यायां पौर्णमास्यां वा पुष्ययोगिन्यां गुञ्जावल्लीर्ग्राहयित्वा मण्डलिकानि कारयेत्[८८] । तेष्वन्नपानभाजनानि न्यस्तानि न क्षीयन्ते[८९] । रात्रिप्रेक्षायां प्रवृत्तायां प्रदीपाग्निषु मृतधेनोः स्तनानुत्कृत्य दाहयेत्[९०] । दग्धान्वृषमूत्रेण पेषयित्वा नवकुम्भमन्तर्लेपयेत्[९१] । तं ग्राममपसव्यं परिणीय यत्तत्र न्यस्तं नवनीतमेषां तत्सर्वमागच्छतीति[९२] । कृष्णचतुर्दश्यां पुण्ययोगिन्यां शुनो लग्नकस्य योनौ कालायसीं मुद्रिकां प्रेषयेत्[९३] । तां स्वयं पतितां गृह्णीयात्[९४] । तया वृक्षफलान्याकारितान्यागच्छन्ति[९५] ।

मन्त्रभैषज्यसंयुक्ता योगमायाकृताश्च ये ।
उपहन्यादमित्रांस्तैः स्वजनं चाभिपालयेत्[९६] ॥

इत्यौपनिषदिके चतुर्दशेऽधिकरणे प्रलम्भने भैषज्यमन्त्रयोगः तृतीयोऽध्यायः ॥ ३ ॥ आदितोऽष्टचत्वारिंशच्छतः ॥ १४८ ॥

---

## १७९. प्रक. स्वबलोपघातप्रतीकारः.

स्वपक्षे परप्रयुक्तानां दूषिविषगराणां प्रतीकारे श्लेष्मातककपित्थदन्तिदन्तशठगोजिशिरीषपाटलीबलास्योनागपुनर्नवाश्वेतावरणक्वाथयुक्तं चन्दनसालावृकीलोहितयुक्तं तेजनोदकम्[१] । राजोपभोग्यानां गुह्यप्रक्षालनम्[२] । स्त्रीणां सेनायाश्च विषप्रतीकारः[३] । पृषतनकुलनीलकण्ठगोधापित्तयुक्तमषीराजिचूर्णं सिन्दुवारितवरणवारुणीतण्डुलीयकशतपर्वाग्रपिण्डीतकयोगो मदनदोषहरः[४] । सृगालविन्नामदनासिन्दुवारितवरणवल्लीमूलकाषायाणामन्यतमस्य समस्तानां वा क्षीरयुक्तं पानं मदनदोषहरम्[५] । कैडर्यपूतितिलतैलमुन्मादहरम्[६] । नस्तःकर्म प्रियङ्गुनक्तमालयोगः कुष्ठहरः ।

कुष्ठलोध्रयोगः पाकशोषघ्नः । कटफलद्रवन्ती विलङ्गचूर्णं नस्तःकर्म शिरोरोगहरः[9] । प्रियङ्गुमञ्जिष्ठतगरलाक्षारसमधुकहरिद्राक्षौद्रयोगो रज्जूदकविषप्रहारपतननिःसंज्ञानां पुनः प्रत्यानयनार्थं[10] । मनुष्याणामक्षमात्रं गवाश्वानां द्विगुणं चतुर्गुणं हस्त्युष्ट्राणाम्[11] । रुक्मगर्भश्चैषां मणिः सर्वविषहरः[12] । जीवन्तीश्वेतामुष्ककपुष्पवन्दाकानामक्षिपे जातस्याश्वत्थस्य मणिः सर्वविषहरः[13] ।

तूर्याणां तैः प्रलिप्तानां शब्दो विषविनाशनः ।
लिप्तध्वजं पताकां वा दृष्ट्वा भवति निर्विषः[14] ॥
एतैः कृत्वा प्रतीकारं स्वसैन्यानामथात्मनः ।
अमित्रेषु प्रयुञ्जीत विषधूमाम्बुदूषणान्[15] ॥

इत्यौपनिषदिके चतुर्दशेऽधिकरणे स्वबलोपघातप्रतीकारः चतुर्थोऽध्यायः ॥ ४ ॥
आदितः एकोनपञ्चाशच्छतः ॥ १४९ ॥ एतावता कौटिलीयस्यार्थशास्त्रस्यौपनिषदिकं चतुर्दशमधिकरणं समाप्तम् । १४ ॥

## १५ अधि. तन्त्रयुक्तिः.

### १८० प्रक. तन्त्रयुक्तयः.

मनुष्याणां वृत्तिरर्थः[1] । मनुष्यवती भूमिरित्यर्थः[2] । तस्याः पृथिव्या लाभपालनोपायः शास्त्रमर्थशास्त्रमिति[3] । तद्द्वात्रिंशद्युक्तियुक्तम्[4] । अधिकरणं विधानं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशोऽतिदेशः प्रदेश उपमानमर्थापत्तिः संशयः प्रसङ्गो विपर्ययो वाक्यशेषोऽनुमतं व्याख्यानं निर्वचनं निदर्शनमपवर्गः स्वसंज्ञा पूर्वपक्ष उत्तरपक्ष एकान्तोऽनागतावेक्षणमतिक्रान्तावेक्षणं नियोगो विकल्पः समुच्चय ऊह्यमिति[5] । यमर्थमधिकृत्योच्यते तदधिकरणम् । पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्तावितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतमिति[6] । शास्त्रस्य प्रकरणानुपूर्वी विधानम्[7] । विद्यासमुद्देशो वृद्धसंयोग इन्द्रियजयोऽमात्योत्पत्तिरिति[8] । एव-

मादिकमिति वाक्ययोजना योगः[10] । चतुर्वर्णाश्रमो लोक इति[11] । पदावधिकः पदार्थः[1] । मूलहर इति पदम्[12] । यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहर इत्यर्थः[13] । हेतुरर्थसाधको हेत्वर्थः[14] । अर्थमूलौ हि धर्मकामाविति[15] । समासवाक्यमुद्देशः[16]। विद्याविनयहेतुरिन्द्रियजय इति[17] । व्यासवाक्यं निर्देशः[18] । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजय इति[19] । एवं वर्तितव्यमित्युपदेशः[20] । धर्मार्थाविरोधेन कामं सेवेत न निःसुखः स्यादिति[21] । एवमसावाहेत्यपदेशः[22] । मन्त्रिपरिषदं द्वादशामात्यान्कुर्वीतेति मानवाः[23] । षोडशेति बार्हस्पत्याः[24] । विंशतिमित्यौशनसाः[25] । यथासामर्थ्यमिति कौटिल्य इति[26] । उक्तेन साधनमतिदेशः[27] । दत्तस्याप्रदानमृणादानेन व्याख्यातमिति[28] । वक्तव्येन साधनं प्रदेशः[29]। सामदानभेददण्डैर्वा यथापत्सु व्याख्यास्याम इति[30] । दृष्टेनादृष्टस्य साधनमुपमानम्[31] । निवृत्तपरिहारान्पितेवानुगृह्णीयादिति[32] । यदनुक्तमर्थादापद्यते सार्थापत्तिः[33] । लोकयात्राविद्राजानमात्मप्रकृतिसंपन्नं प्रियहितद्वारेणाश्रयेत नाप्रियहितद्वारेणाश्रयेतेत्यर्थादापन्नं भवतीति[34] ।उभयतोहेतुमानर्थः संशयः[35]।क्षीणलुब्धप्रकृतिमपचरितप्रकृतिं वेति[36] ।प्रकरणान्तरेण समानोऽर्थः प्रसङ्गः[37]।कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेणेति[38]। प्रतिलोमेन साधनं विपर्ययः[39]।विपरीतमतुष्टस्येति[40]। येन वाक्यं समाप्यते स वाक्यशेषः[41] । छिन्नपक्षस्येव राज्ञश्चेष्टानाशश्चेति[42] । तत्र शकुनेरिति वाक्यशेषः[43] । परवाक्यमप्रतिषिद्धमनुमतम्[44] । पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभाग इति[45]। अतिशयवर्णना व्याख्यानम्[46]। विशेषतश्च संघानां संघधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः[47]। तन्निमित्तो विनाश इत्यसत्परिग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यादिति[48]। गुणतः शब्दनिष्पत्तिर्निर्वचनम्[49]। व्यस्यत्येनं श्रेयस इति व्यसन-

मिति[५०] । दृष्टान्तो दृष्टान्तयुक्तो निदर्शनम्[५१] । विगृहीतो हि ज्यायसा हस्तिनः पादयुद्धमिवाभ्युपैतीति[५२] । अभिप्लुतव्यपकर्षणमपवर्गः[५३] । नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्काया इति[५४] । परैरसंज्ञितः शब्दः स्वसंज्ञा[५५] । प्रथमा प्रकृतिस्तस्य भूम्यनन्तरा द्वितीया भूम्येकान्तरा तृतीयेति[५६] । प्रतिषेद्धव्यं वाक्यं पूर्वपक्षः[५७] । स्वाम्यमात्यव्यसनयोरमात्यव्यसनं गरीय इति[५८] । तस्य निर्णयनवाक्यमुत्तरपक्षः[५९] । तदायत्तत्वात्[६०] । कूटस्थानीयो हि स्वामीति[६१] । सर्वत्रायत्तमेकान्तः[६२] । तस्मादुत्थानमात्मनः कुर्वीतेति[६३] । पश्चादेवं विहितमित्यनागतावेक्षणम्[६४] । तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्याम इति[६५] । पुरस्तादेवं विहितमित्यतिक्रान्तावेक्षणम्[६६] । अमात्यसंपदुक्ता पुरस्तादिति[६७] । एवं नान्यथेति नियोगः[६८] । तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं चेति[६९] । अनेन वानेन वेति विकल्पः[७०] । दुहितरो वा धर्मिष्ठेषु विवाहेषु जाता इति[७१] । अनेन चानेन चेति समुच्चयः[७२] । स्वसंजातः पितृबन्धूनां च दायाद इति[७३] । अनुक्तकरणमूह्यम्[७४] । यथावद्दाता प्रतिगृहीता च नोपहतौ स्यातां तथानुशयं कुशलाः कल्पयेयुरिति[७५] ।

एवं शास्त्रमिदं युक्तमेताभिस्तन्त्रयुक्तिभिः ।
अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च[७६] ॥
धर्ममर्थं च कामं च प्रवर्तयति पाति च ।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च[७७] ॥
येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्[७८] ॥

इति तन्त्रयुक्तौ पञ्चदशेऽधिकरणे तन्त्रयुक्तयः प्रथमोऽध्यायः ॥ १ ॥
आदितः पञ्चाशच्छततमोऽध्यायः ॥ १५० ॥ एतावता
कौटिलीयस्यार्थशास्त्रस्य तन्त्रयुक्तिः पञ्चदशम-
धिकरणं समाप्तम् ॥ १५ ॥

दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च ॥

# CORRIGENDA

## Introduction.

| Page | Line | for | read | Page | Line | for | read |
|---|---|---|---|---|---|---|---|
| 1 | 7 | Cānakya | Cāṇakya | 23 | 11 | anvoy | envoy |
| 3 | 28 | wordly | worldly | 23 | 25 | *viceversā* | *viceversa* |
| 5 | 12 | Pecula-rities | Peculia-rities | 24 | 28 | referes-ealier | refers-earlier |
| 11 | 15 | earlist | earliest | 28 | 21 | Malanāga | Malla-nāga |
| 12 | 3 | tamaṇi | tāmaṇi | | | | |
| 16 | 23 | वाभ्यदिकं | वाभ्यधिकं | 30 | 20 | Bāhudan-trīputra | Bāhuda-ntīputra |
| 17 | 13 | दाद्य | दद्या | | | | |
| 17 | 14 | दातव्यां | दातव्यो | 32 | 1 | Veda | Vedas |
| 17 | 15 | A. VI, 13 | A. IV, 13 | 35 | 18 | tex | tax |
| 18 | 12 | sence | sense | 35 | 33 | Kautilya | Kauṭilya |
| 19 | 24 | tne | the | 37 | 18 | Wreched | Wreck-ed |
| 20 | 27 | Śastras | Śāstras | | | | |
| 20 | 28 | kātsyā-yana | kātyā-yana | 43 | 1 | Zink | Zinc |
| | | | | 44 | 5 | larity | liarity |
| 23 | 3 | sence | sense | 45 | 28 | question | questions |

## TEXT.

| Page | Line | for | read | Page | Line | for | read |
|---|---|---|---|---|---|---|---|
| | 0 | कारः[१२] | कारः[१३] *and alter the following numbers.* | 14 | 2 | णा मे | णामे |
| | | | | 14 | 24 | गुण | गुण- |
| | | | | 16 | 3 | भ्रष्टः, | भ्रष्टः |
| | | | | 16 | 6 | मिद | मिदं |
| 8 | 4 | पँः । | पः | 17 | 25 | ख्यमु | क्यमु |
| 8 | 25 | ताम्ँ ॥ | ताम्ँ ॥ *and alter the following numbers.* | 19 | 21 | मङ्ग | मङ्क |
| | | | | 20 | 17 | ऋदो | ऋेदो |
| | | | | 21 | 17 | येत्या | येदित्या |
| | | | | 21 | 22 | न्पर | त्पर |
| 12 | 17 | सुष्टिं | मुष्टिं | 22 | 1 | पन्डो | पण्डो |
| 13 | 11 | वाप्र | वा प्र | 25 | 12 | गं- | गंः |

| Page | Line | for | read |
|---|---|---|---|
| 25 | 18 | र भू | रभू |
| 26 | 2 | त्कास्त्रि | काः स्त्रि |
| 26 | 24 | लीद | ली द |
| 27 | 22 | नद्ध | नद्ध— |
| 28 | 16 | त्रिभ्यो | त्रियेभ्यो |
| 29 | 15 | पूर्व | पूर्वः |
| 29 | 21 | द्रव्य | द्रव्य- |
| 30 | 3 | द्रव्यं | द्रव्य |
| 31 | 4 | रा | राः |
| 31 | 5 | वीर्थ | वीर्थ |
| 31 | 22 | ध्व | र्ध्व |
| 32 | 15 | लष | ष |
| 33 | 1 | नी | नीः |
| 34 | 12 | सर्पि | सर्पिः |
| 36 | 11 | थ। | थः। |
| 38 | 11 | तिस्यात् | ति स्यात् |
| 40 | 11 | णो | णो– |
| 40 | 27 | नित्यंप | नित्यं प |
| 41 | 4 | किं | कं |
| 42 | 16 | न्नया | न्न्या |
| 43 | 9 | वचि | वाचि |
| 48 | 15 | तेनः | तेन |
| 49 | 10 | द्धरः | द्धारः |
| 52 | 27 | वर्णोंध्र | वर्णोंध्रे |
| 55 | 26 | स्त्री | स्त्री |
| 56 | 26 | शिग्र | शिग्रु |
| 57 | 5 | र्ध भा | र्धभा |
| 57 | 6 | का-तु | कस्तु |
| 57 | 7 | त्तुणाः | त्तुगणाः |
| 57 | 8 | गां | गौं |
| 61 | 6 | चा- | चारा- |
| 63 | 17 | रज्ज | रज्जु |
| 64 | 3 | लिका | लिको |
| 64 | 8 | यो- | यो |
| 64 | 9 | भागः | भागाः |
| 65 | 16 | छ्राद | च्छाद |
| 65 | 19 | न्वौयनमा | न्वायनमौ |
| 68 | 26 | व्याय | व्या |
| 69 | 15,16 | *dele commas* | |
| 70 | 26 | द्द्यः | द्द्युः |
| 71 | 6 | ष्ठः(twice) | ष्ठुः |
| 71 | 16 | बंज | बीज |
| 72 | 19 | घातः | घाते |
| 74 | 6 | पास्य | पाळ्य |
| 74 | 7 | मूह | यूह |
| 75 | 10 | लिं twice | ळि |
| 77 | 13 | यतां | यतो |
| 77 | 17 | बणं | वर्ण |
| 77 | 19 | फलं | पलं |
| 78 | 3 | पयग्रं | पर्यग्रं |
| 79 | 10 | थाद्द | थाट्ट |
| 81 | 7 | च्य | व्य |
| 83 | 11 | जन | जान |
| 84 | 25 | । | ॥ |
| 85 | 2 | विंश | विंश– |
| 85 | 16 | शन्य | शून्य |
| 88 | 15 | क्रु भ | क्रुम |

| Page | Line | for | read |
|---|---|---|---|
| 90 | 20 | स्त्री धना-यांत | स्त्रीधनायां त |
| 90 | 26 | पुत्रीं | पुत्रा |
| 91 | 16 | या मी | यामी |
| 91 | 19 | न्बाधि | बाधि |
| 92 | 3 | रट्टो | रहो |
| 92 | 27 | साध्वा | साध्वी |
| 93 | 19 | स्थै | स्थै- |
| 94 | 5 | देन | दने |
| 94 | 16 | ह्यंशं | द्व्यंशं |
| 95 | 8 | ज्ञातः | ज्ञाताः |
| 95 | 16,20 | ज्येष्ठ | ज्यष्ठ |
| 95 | 23 | आदा | अदा |
| 96 | 9 | बा | वा |
| 96 | 21 | त्रण | त्रेण |
| 97 | 17 | त्या | त्याः |
| 100 | 10 | नीद | नदी |
| 101 | 7 | वाऽक | वाक |
| 101 | 9 | ज्यप्र | ज्य प्र |
| 101 | 18 | श भ | शभ |
| 101 | 20 | दण्डाः | दण्ड्याः |
| 102 | 5 | छन्न | च्छन्न |
| 102 | 12 | राक्षा | रक्षा |
| 104 | 2 | वुबलं भित्तव | तुबलं भित्त |
| 104 | 9 | स्त | स्तद |
| 104 | 15 | ने इति | नेति |
| 105 | 20 | वाना | वा ना |
| 106 | 2 | द्वं- | द्वं |
| 106 | 11 | मस्य- | मस्य |
| 107 | 6 | वन्ध | बन्ध |
| 107 | 26 | ज्ञोतया | ज्ञातयो. |
| 108 | 5 | का | का- |
| 109 | 17 | गमनं | गमने |
| 109 | 22 | मध्यं | माध्य |
| 111 | 3,12 | गृ | ग्र |
| 112 | 9 | स्व | स्वं |
| 113 | 13 | इत्य | इत्या |
| 114 | 8 | राः | रा |
| 115 | 14 | कलहे | कलहो |
| 118 | 23 | थध्यां | ाध्यां |
| 119 | 16 | तावधः | ता वधः |
| 120 | 3 | वान | वान् |
| 120 | 26 | स्त्रंद | स्त्रं द |
| 121 | 3 | याम्नि | याम्नि |
| 121 | 22 | तावा | ता वा |
| 123 | 22 | वण | वण- |
| 124 | 4 | ता | ता- |
| 128 | 11 | द्वन्ध | द्वन्ध |
| 128 | 14 | मित्त | भित्तं |
| 131 | 17 | रिश | रिंश |
| 132 | 4 | छुले | च्छुले |
| 134 | 18 | स्वन्द | स्कन्द |
| 135 | 10 | छे | च्छे |
| 136 | 12 | सी | सीं |
| 136 | 17 | प्र | प्रा |
| 136 | 19 | मप | मुप |
| 138 | 5 | स्यंभ | स्यं भ |

| Page | Line | for | read |
|---|---|---|---|
| 138 | 13 | मता | माता |
| 141 | 21 | कन्तो | कान्तो |
| 142 | 22 | कीर्णी | कीर्णा |
| 144 | 7 | त्यक्तोवा | त्यक्तो वा |
| 144 | 14 | मभु | मायु |
| 144 | 21 | यागं, यांती | यागे,यां ती |
| 145 | 13 | याह्ये | या ह्ये |
| 145 | 22 | षष्ठि | षष्टि |
| 146 | 3 | णोर्ध्वे | णोऽर्ध्वे |
| 147 | 10 | दारणं | धारणं |
| 147 | 13 | च्चपा | च्च पा |
| 147 | 17 | भ्रकु | भ्रूकु |
| 147 | 24 | याच्छ्र | याच्छ्र |
| 148 | 1 | दुष्टा | दृष्टा |
| 148 | 14 | द्युत | द्यूत |
| 148 | 26 | भ्रकु | भ्रूकु |
| 150 | 23 | मंच्चि | मं च्चि |
| 150 | 26 | संन्नि | संनि |
| 152 | 13 | भ्रकु | भ्रूकु |
| 152 | 22 | दीर्घमि | दीर्घाम |
| 153 | 19 | यस्स्थ | यः स्थ |
| 155 | 7 | रात् | रान् |
| 158 | 18 | त्ति मा | त्तिमा |
| 160 | 22 | परि | पर |
| 161 | 26 | तु प्रा | तुप्रा |
| 161 | 27 | ह्याया | ह्या या |
| 162 | 7 | विग्र | विगृ |
| 162 | 23 | सहि | स हि |
| 164 | 16 | धाना- | धाना |
| 164 | 20 | ग्रहेण | ग्रहणे |
| 164 | 23 | सम याम | समाभ्याम |
| 165 | 8 | नेता | नैता |
| 166 | 13 | पत्तस | पत्तं स |
| 167 | 5 | द्रुगतः | द्रुतः |
| 168 | 4 | गूढा | गूढो |
| 169 | 1 | ननें | नेन |
| 170 | 9 | लाम | लाभ |
| 171 | 6 | त्वानु | त्वनु |
| 173 | 2 | 'त्योहि | त्यो हि |
| 175 | 11 | प्राप्तं | प्राप्तुं |
| 176 | 25 | स्यांमभो | स्यां भूमौ |
| 177 | 20 | कमरिम्भो | कर्मारम्भो |
| 184 | 12 | वेल | बेल |
| 185 | 19 | त्व दर्प | त्वदर्प |
| 189 | 6 | षेशः | शेषः |
| 189 | 7 | स्रचैक | स्र चैक |
| 189 | 9 | रात्र | रात्रा |
| 189 | 20 | ग | ग- |
| 191 | 27 | भैूतम्ये | तैर्भूम्ये |
| 194 | 24 | यता | वता |
| 197 | 20 | र्थ सं | र्थसं |
| 198 | 13 | वन्धश्च | बन्धश्च |
| 199 | 5 | तत्य | तस्य |
| 201 | 2 | ग्रह विधा | ग्रहाविधा |
| 201 | 5 | स्सं | ः सं |
| 201 | 12 | र्या | र्याः |
| 201 | 24 | टिविकाः | ाटविकाः |
| 203 | 10 | सत्रि | सात्त्, |

| Page | Line | for | read |
|---|---|---|---|
| 203 | 24 | सत्र | सत्त |
| 204 | 12 | वाप्य | वाप्यव |
| 206 | 13 | सस्यं, | *dele comma* |
| 206 | 23 | त्रार्याः | चार्याः |
| 207 | 19 | वल | बल |
| 208 | 2 | वी | वीं |
| 208 | 4 | कायम् | कार्यम् |
| 208 | 12 | विल्वं | बिल्वं |
| 209 | 2 | श्रेयः। | श्रेयः |
| 209 | 20 | न्नेत | न्ने त |
| 210 | 17 | ंना | ेना |
| 211 | 1 | त्तीब्र | त्ती ब्र |
| 211 | 9 | पिश | पि श |
| 212 | 19 | प्रकोप | प्रकोपक |
| 213 | 5 | सनु | सानु |
| 213 | 23 | अभ्यत | अभ्यन्त |
| 214 | 5 | वा, | वा |
| 215 | 9 | भिर | भिर- |
| 217 | 19 | प्राप्तः प्र | करोति प्राप्तः प्र |
| 217 | 20 | पर | परे |
| 220 | 4 | ह्यपायाः | ह्युपायाः |
| 220 | 19 | अदि | आदि |
| 221 | 20 | स्कधा | स्कन्धा |
| 222 | 21 | परसै | परसै |
| 223 | 5 | बा | वा |
| 223 | 9 | पृष्ट | पृष्ठ |
| 223 | 13 | रतो | तरतो |
| 223 | 15,18 | सत्र | सत्त |

| Page | Line | for | read |
|---|---|---|---|
| 224 | 18 | षा | षाः |
| 225 | 6 | व्यूहः | व्यूहाः |
| 226 | 17 | पदाति | पद्यतिक |
| 228 | 18 | द्वि | दि्द्र |
| 229 | 10 | व्यू | व्यू |
| 231 | 10 | डिकेषु | ण्डिकेषु |
| 231 | 24 | ांश्च | ंश्च |
| 232 | 16 | कः | क |
| 232 | 21 | की | की- |
| 233 | 17 | यु | युः |
| 234 | 8 | द्रव्य | द्रव्य- |
| 241 | 13 | दत्वा | दत्त्वा |
| 243 | 13 | कुमार | कुमारा |
| 243 | 18 | द्धृतं | द्धृतं |
| 243 | 22 | वसी | वासी |
| 244 | 18 | भा | मा |
| 245 | 23 | भूमि | भूमि- |
| 246 | 10 | वाह | वाम |
| 247 | 9 | विजु | विजि |
| 247 | 16 | व्यास | व्यस |
| 247 | 23 | च्चेष्टत | च्चेष्टत |
| 248 | 7 | पूर्व प्र | पूर्वप्र |
| 249 | 14 | वाा | वा |
| 249 | 20 | कृष्ट | कृष्ट- |
| 250 | 1 | मषिम | मषिम |
| 250 | 2 | सि | सीस |
| 250 | 14 | मृद्वी | मृद्वी |
| 250 | 22 | ,, | ,, |
| 250 | 25 | युक्ता | युक्त |

| Page | Line | for | read |
|---|---|---|---|
| 251 | 13 | स्यज | स्य ज |
| 255 | 10 | दिग्धां | दिग्धो |
| 256 | 7 | स्यदा | स्य दा |
| 257 | 26 | वषुता | वातेषु |
| 258 | 15 | त्थित | त्थितं |
| 260 | 1 | बध्वा | बद्ध्वा |
| 261 | 15 | विध्वा | विद्ध्वा |
| 261 | 24 | स्यपु | स्य पु |
| 262 | 6 | च्छुवा | च्छवा |
| 262 | 25 | पिष्ठ | विष्ठ |

| Page | Line | for | read |
|---|---|---|---|
| 263 | 13 | मन्त्र भै | मन्त्रभै |
| 263 | 20 | तेज | नेज |
| 264 | 1 | न्ती विल· ङ्गचूर्ण | न्तीविलङ्गचूर्ण |
| 264 | 4 | मात्र | मात्रं |
| 265 | 9 | नन्कु | न्कु |
| 265 | 19 | यांभू | यां भू |
| 266 | 17 | मेप | मे |
| 266 | 22 | अमर्ष | अमर्षे |



# ADDENDA AND CORRIGENDA IN THE FIRST VOLUME.

## INTRODUCTION.

| Page | Line | for | read |
|---|---|---|---|
| 1 | 21 | Theories | Théories |
| 4 | 22 | Dharm | Dharma |
| 5 | 3 | *dele* second comma | |
| 6 | 9 | Atma | Ātma |
| 9 | 34 | Midarā | Mudrā |
| 10 | 28 | chandra | candra |
| 11 | 17 | other | others |
| 16 | 16 | समी | स्मी |
| 17 | 29 | y | y. |
| 18 | 13 | trail | trial |
| 19 | 10 | *after* M. *add* failed to point out the parallel texts of K. *and for* question *read* questions | |
| 19 | 24 | and M. | and N. |
| 19 | 24 | work | works |
| 20 | 9 | for | far |
| 21 | 1 | *dele* of the role | |
| 21 | 32 | maiestates | maiestatis |
| 22 | 27 | accounts | account |
| 23 | 1 | तं | ते: |
| 23 | 5 | या | मा |
| 24 | 6 | terminated | terminates |
| 24 | 30 | I, | I. |
| 24 | 31 | *balm* | *balam* |
| 29 | 19 | Andharas | Andhras |
| 32 | 1 | *dele* | and |
| 32 | 22 | *dele* | of |
| 34 | 17 | *after* myths. *adde* K. Nāg (coi. cit. 35) has proposed to identify Cāṇakya with Kaṇika, the fabulous Brahman minister in the Mahābhārata. | |
| 35 | 1 | inscriptions, | inscriptions |
| 36 | 29 | ......... | apo syssemoce |
| 38 | 12 | correspondence | correspondences |
| 38 | 19 | Samvākaka | Saṃvākaka |
| 42 | 1 | II, | 11th |
| 42 | 20 | स: | सा: |
| 43 | 11 | (Western) | Western |
| 46 | 21 | Taporewala | Taraporewala |

# TEXT.

| Page | L. | for | read |
|---|---|---|---|
| 18 | 11 | हीता | हीताः |
| 68 | 26 | ब्याय | ब्या |
| 78 | 13 | त्तम् | श्रम् |
| 103 | 24 | वा । | वा |
| 132 | 25 | भित्त्वा *twice* | भित्त्वा |
| 133 | 20 | परि | पार |
| 142 | 20 | मम...षय | म...षध |
| 146 | 11 | षष्ठि | षष्टि |
| 150 | 25 | ब्यस | ऽब्यस |
| 159 | 6 | ङ्खि म | ङ्खिम |
| 159 | 16 | ह्यपि | ह्येऽपि |
| 160 | 10 | भ्यां अ | भ्याम |
| 169 | 16 | सिद्धिं | सिद्धं |
| 171 | 3 | मेनानुग्राह्यः | मा नानुग्राह्याः |
| 173 | 9 | ता सा | तासा |
| 175 | 20 | भिः त्य | भिस्त्य |
| 177 | 15 | य भ | यभ |
| 180 | 14, 17 | नोः | नः |
| 181 | 9 | भाग | भावग |
| 183 | 24 | हीन | हीनः |
| 183 | 26 | त्रा | त्र |

| Page | L. | for | read |
|---|---|---|---|
| 187 | 17 | बध्वा | बद्ध्वा |
| 188 | 18 | धत्ते | धीयत्ते |
| 188 | 22 | रजा | र्जा |
| 188 | 19 | धीयते | धत्ते |
| 193 | 19 | हात | हृति |
| 197 | 17 | स्तैः | ःस्वैः |
| 201 | 1 | हस्त | हा स्त |
| 205 | 15 | व | थ |
| 209 | 12 | क्र | क्रू |
| 221 | 16 | ध्वा | दुध्वा |
| 214 | 9 | ता | ताः |
| 214 | 20 | ध्वी | ब्वी |
| 214 | 25 | ह्रायां | ह्रयां |
| 222 | 10 | तरो | तारो |
| 229 | 11 | त्याः | त्यः |
| 231 | 4 | द्वि | वि |
| 232 | 13 | याव | यौव |
| 232 | 26 | ध्वा | दुध्वा |
| 236 | 26 | क्रुभ | क्रुद्ध |
| 242 | 22 | र्तिक | र्तिक- |
| 247 | 8 | यामा | यमा |
| 254 | 6 | तुम्ब | तुम्बी |

# THE PUNJAB SANSKRIT SERIES.

## READY FOR SALE.

1. **Barhaspatya Artha Sastram** or the Science of Politics according to the School of Bṛhaspati. Original text in Devanagari characters edited with an introduction, notes and English translation by Dr. F. W. Thomas, M. A., Librarian, India Office Library, London, together with an Historical Introductory Remarks and Indexes by Pt. Bhagavad Datta, B. A., Supdt. Research D. A. V. College, Lahore. "Its six chapters deal successively with the personal conduct required in a king; his duties and principles, his studies; omens and rules for counsel; means for execution of Policy; and courses of Policy." Printed on best ivory paper, cloth bound with gold letters. Price Rs. 2/8/- Foreign 6 sh.

2. **Jaimini Gṛhya Sutra** or the Domestic Ceremonies according to the School of Jaimini. Original text in Devanagari Ch. edited with extracts from the comm. Subodhini, list of Mantras, Notes introduction and for the first time translated into English by Dr., W. Caland, M. A., Professor of Sanskrit in the University of Utrecht. Printed on best ivory paper, cloth bound with gold letters. Price Rs. 6/-, Foreign 12/- sh.

3. **Aryavidya Sudhakara** of Yajñeshwara Bhatta. A compendium of Hindu Ritual Philosophy, etc. Reprinted with many additions by Mahamahopadhyaya Pt. Siva Datta, Kudala, Hd. Pandit Oriental College, Lahore. Printed on best paper, cloth bound with gold letters. Price Rs. 8/-, Foreign 16/- sh.

4. **Kautilya Artha Sastram** Original text prepared with the help of Münich Mss., and all other sources available. Edited with an extensive historical introduction of 47 pages, and English notes by Dr. J. Jolly, M.A., Ph. D. and Dr, R. Schmidt M.A. Ph. D. The ancient commentary Nayachandrika is also added. Many valuable readings are given. Vol I. Introduction and text. cloth bound Rs. 5/-

WORKS IN THE PRESS.

5. **Nilmata Purana.** Hitherto unpublished text. History of Kashmir older than Kalhan's Rajtarangani. Edited with notes and introduction etc., by Prof. Kanjilal, M. A., and J. D. Zadu, M. A., M. O. L., (Ready shortly).

6. **Bijopnaya** of Bhaskaracharya text with comm. edited by A. Kuppusamy Ayyar.

7. **Atharwan Jyotish.** Hitherto unpublished text edited with variants and a valuable English Introduction by Pt. Bhagavad Datta, B.A., (Ready shortly).

8. **Kanviya Satapatha Brahmana.** Original text edited with notes and an extensive introduction of nearly 150 pages by Dr. W. Caland, M. A. Hitherto unpublished text.

9. **Apastamba Sulba Sutra,** text, with Sanskrit commets., notes, introduction and English translation with several geometrical diagrams by Pt. Bhagawad Datta, B. A., and Giyan Chand, M. A.

10. **English translation of Trishashthi Shlaka Purush Charitra** of Sri Hema Chandra Acharya by Pro. Amulyacharan Vidyabhushana. An ancient historical work.

# SELECTED OPINIONS.

"I have read the Jaiminiya Grihya Sutra. I did not know that the work existed. It is a very good edition. The preface is splendid. It gives an upto date information on the Literature of the Sama Veda. Hitherto we had these informations in fragments at best. We are very lucky in being able to enlist the services of Dr. Caland for the benefit of your firm. I know him by his works for the last thirty years nearly. The grihya ceremonies are still performed all over India."

*Mahamahopadhyaya Pt. Haraprasad Shastri,*
*M. A., C. I. E.*

"Dr. Thomas's edition and translation of the Brihaspati Sutras will no doubt be found very useful."

*Sir George A. Grierson,*
*K. C. I. E., Ph. D.*

"Talking of the wisdom of the past brings to me a new and learned translation by Dr. F. W. Thomas, M. A.,.........of the Ancient Brihaspati Sutra. The Brihaspati Sutra means the Science of politics according to the School of Brihaspati and might be termed "The School of conduct for kings." As with all the old wisdom, nearly the entire Sutra of Brihaspati is just as applicable to proper inter-course to-day, if modified by changes of environment and condition."

*Birmingham Weekly Post 19-8-22.*

"Prof. W. Caland's edition of the Sanskrit text of Jaimini Grihyasutra, with extracts from comm., etc., and English translation of the text which has recently been published as No. 2 of the "Punjab Sanskrit Series" will be welcome to

many students. The Jaiminiya-sakha of the Sama Veda is a Brahmanic school that in these times has but few representatives in India; but they have an ancient tradition, and their texts are valuable. The present work which contains the rituals for Pākayajñas, Srāddhas and Astakās, Sanskāras (down to funeral rites) Grhavidhi rectification of evil omens, fast-day recitation of the Veda, and appeasement of planetary influences, contains much interesting matter from the standpoint of comparative religion, folklore, and Sanskrit grammer, and differs considerably from all other works of the kind............"

*"Luzac's Book Review, London."*

"Many thanks for the copy of Jaiminiya Grihya Sutra. It is a valuable publication and I along with several men will derive a great benefit from it."

*Mahamahopadhyaya Dr. Ganganath Jha, M. A.,*
*Vice-Chancellor, Allahabad University.*

# त्वर्यताम् ! त्वर्यताम् !! त्वर्यताम् !!!

वेद्यविद्याकुमुदिनीविकासनविशारदः ।
विराजते ह्यविरतमार्यविद्यासुधाकरः ॥ १ ॥
वेदादिशास्त्रपाथोधिमन्थनेनोद्धृतः सताम् ।
विकासयतु चेतांसि त्वार्यविद्यासुधाकरः ॥२॥
विद्याविलासिनीलीलाविरहान्धीकृतात्मनाम् ।
स्वान्तध्वान्तं हरत्येष आर्यविद्यासुधाकरः ॥३॥

हंहो आर्यविद्याविलासिनीविलासविलोकनलालसाः ! सहृदया !! महोदयाः !!! क्षण मितोऽपि दीयतां सदयमिदं युष्मदीयं नयनद्वयम् ।

विलोक्यतां मुद्रणालयाकाशविमुद्रितो बहुप्रकाशो वेदादिवेद्यविद्याकुमुदिनीविकासनविशारदोऽयमार्यविद्यासुधाकरः।(History of Sanskrit Literature).

ग्रन्थोऽयं समस्तार्यवर्यविद्याविवेकविनयनयशिल्पविज्ञानशौर्यौदार्यचातुर्यादिकथाप्रकाशको दाक्षिणात्येन द्विजन्ममूर्धन्येन चिमणाजीतनूजेन पण्डितप्रवरेण यज्ञेश्वरेण विरचितः ।

ग्रन्थोऽयं ग्रन्थकारेण पञ्चभिः प्रकाशैः समापितः ।

अत्र च प्रथमे प्रकाशे—आर्यजनानां मूलोत्पत्तिस्थानम्, तद्विषयका विप्रतिपत्तयः, त्रिविष्टपस्य विवेचनम्, ब्राह्मणादिजातिचतुष्ट्यविवेकस्य प्राचीनता, आर्यप्रजायाः प्रसवकालः, आर्याणां राजनीतिः, वैदिककाले वर्णलिपिप्रकाशः, तत्प्रचारः, वर्णलिपिप्रकाशविषयकं शर्मण्यदेशीयभट्टमोक्षमूलरमतं, तन्मतनिरसनं, धर्मलक्षणं, वेदस्वरूपं, ऋग्वेदस्य परिचयः, इत्येवमादयोऽवश्यं ज्ञातव्या विषयाः सुनिरूपिताः ।

द्वितीये च प्रकाशे—अग्निहोत्रं, आग्रयणं, चातुर्मास्यं, सोमयागः, अश्वमेधयागः, इत्येवमादीनि श्रौतकर्माणि सविस्तरं निरूपितानि ।

तृतीये च प्रकाशे—गर्भाधानादीनि महायज्ञान्तानि पञ्चविंशतिस्मार्तकर्माणिः, नैमित्तिक–वार्षिक–मासिक–दैनिक–स्वरू-

पाश्चत्वारः संस्काराः, ब्रह्मचर्याद्याश्रमचतुष्टयविचारः, इत्यवेमादयोऽवश्यं ज्ञातव्या विषया निरूपिताः।

चतुर्थे प्रकाशे च—समयाचार-कुल-मिश्रकस्वरूपं तान्त्रिकमतम्, चतुःषष्टितन्त्रात्मकः कौलमार्गः, चार्वाक-माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकार्हताभिधनास्तिकमतानि, षड्दर्शनोक्तमतानि, रामानुजाचार्यमतम्, मध्वाचार्यमतं, वल्लभाचार्यमतं, पाशुपतमतं, शैवमतं, प्रत्यभिज्ञामतं, रसेश्वरमतं, इत्येवमादयो विषयाः सुनिरूपिताः।

पञ्चमे प्रकाशे च—वेदबाह्यधर्मप्रचारकारणम्, पुराणप्रतिपाद्यविविधधर्मविरोधपरिहारः, षड्दर्शनमतविरोधपरिहारः इत्येवमादयो विषयाः सुनिरूपिता।

ग्रन्थोऽयं सर्वाङ्गमनोहरतया विमुद्रितं विक्रयणाय सज्जीभूतमास्ते। अतस्त्वर्यतामेतद् ग्रहणाय। मूल्यं ८)

---

## कौटिल्य अर्थ शास्त्र का सरल हिन्दी अनुवाद।

**अनु० हिं० संसार के परिचित प्रो० प्राणनाथजी विद्यालङ्कार**

पं० कृष्णकान्त जी मालवीय अपने पत्र अभ्युदय में लिखते हैं कि "सम्राट् चन्द्रगुप्त को राजसिंहासन पर बैठानेवाले "चाणक्य" ही मूल ग्रन्थ के लेखक हैं। ग्रन्थ बड़े महत्व का है। इसे पढ़ने से पता चलता है कि कूटनीति और राजनीति में भारत किसी समय कैसे उच्च शिखर पर बैठा हुआ था। इससे यह ज्ञात होगा कि आधुनिक शासन-प्रथा की प्रत्येक महत्वपूर्ण बातें भारतवासी जानते थे। अनुवाद सुन्दर है और हम अनुवादक को इस पुस्तक को हिन्दी जाननेवालों के सामने रखने पर बधाई देते हैं। हम आशा करते हैं कि भारतवासी इस पुस्तक को अपनायेंगे"। बढ़िया कपड़े की जिल्द सहित मूल्य ४) है। पुस्तक शीघ्र ही समाप्त होनेवाली है इसलिए शीघ्रता करें।

इनके अतिरिक्त सब प्रकार की पुस्तकें मिलने का पताः—

**मोतीलाल बनारसीदास अध्यक्ष—पञ्जाब संस्कृतपुस्तकालय**

**सैदमिट्ठा, लाहौर।**